# ॥ अथ दुर्गापाठ सटीक ॥

७ बार
न. कि. प्रे. ल. सन् १९०७ ई०

श्रीगणेशाय नमः ॥ अलिकुलमण्डितगण्डं प्रत्यूहतिमिरमार्त्तण्डं सिन्दूरारुणशुण्डं देवंवेतण्डमुण्डमवलम्बे १ वि
घ्नेश्वरायवरदायसुरप्रियाय लम्बोदरायसकलायजगद्धिताय नागाननायक्षितियज्ञविभूषिताय गौरीसुतायगणनाथनमो
नमस्ते २ श्लोकः ॥ तपस्यन्तंमहात्मानं मार्कण्डेयंमहामुनिम् ॥ व्यासशिष्योमहातेजा जैमिनिःपर्य्यपृच्छत १ व्याख्या
व्यासशिष्यः महातेजाः जैमिनिः तपस्यन्तं महात्मानं महामुनिं मार्कण्डेयं पर्य्यपृच्छत इत्यन्वयः व्यासस्यशिष्यःव्यास
शिष्यः महातेजोयस्यसः महातेजाः तपस्यन्तं तपस्यतीति तपस्यन् तं तपस्यन्तं महान्आत्मा यस्यसः महात्मा तं महा
त्मानं महांश्चासौ मुनिश्च महामुनिः तं महामुनिं मृगान् कण्डूयतीति मृकण्डः मृकण्डस्य अपत्यंपुमान् मार्कण्डेयः तंमा

मार्कण्डेयउवाच ॥ सावर्णिस्सूर्य्यतनयोयोमनुःकथ्यतेष्टमः। निशामयतदुत्पत्तिं विस्तराद्गदतोमम १

र्कण्डेयं मृगान् हरिणान् १ श्लोकः॥मार्कण्डेयमहाप्राज्ञ सर्व्वशास्त्रविशारद॥श्रोतुमिच्छाम्यशेषेण देवीमाहात्म्यमुत्तमम्
२ व्याख्या हे महाप्राज्ञ!हेसर्व्वशास्त्रविशारद!अहंउत्तमं देवीमाहात्म्यं अशेषेण श्रोतुंइच्छामि इत्यन्वयः प्रज्ञैवप्राज्ञा महती
प्राज्ञा यस्यसःमहाप्राज्ञः तत्सम्बोधने हे महाप्राज्ञ!प्रज्ञाबुद्धिःसर्व्वाणिचतानि शास्त्राणि सर्व्वशास्त्राणि सर्व्वशास्त्रेषु विशा
रदः तत्सम्बोधने हे सर्व्वशास्त्रविशारद!सर्व्वाणि समस्तानि शास्त्राणि व्याकरणादीनि विशारदः कुशलःदक्षःउत्तमं श्रेष्ठं
देव्याःमाहात्म्यंदेवीमाहात्म्यं तत् देवीमाहात्म्यं अशेषेण सामग्र्येण इति प्रश्नश्लोकौ २ मार्कण्डेय उवाच सावर्णिरिति हे
मुने!व्यासादिभिः सावर्णिः सूर्य्यतनयो यो मनुः अष्टमः कथ्यते तदुत्पत्तिं विस्तरात् गदतो मम त्वं निशामय समानः व १

 र्णोयस्याः सा सवर्णा सवर्णायाः अपत्यंपुमान् सावर्णिः समानः तुल्यः वर्णः स्वरूपः सवर्णायाः छायायाः सूर्य्यपत्न्याः
२ सूर्य्यतनयः तनयः पुत्रः तदुत्पत्तिः तस्य उत्पत्तिस्तदुत्पत्तिः तां तदुत्पत्तिः तस्य अष्टममनोः विस्तरात् गदतः गदतीति 
गदन् तस्मात् गदतःमम मत्तः पञ्चम्यर्थे षष्ठी निशामय जानीहि १ महामायेति हे मुने!रवेस्तनयः सावर्णिः महाभागः
सः महामायानुभावेन यथामन्वन्तराधिपः बभूव तथा त्वं शृणु रवेः सूर्यस्य तनयः समानः वर्णो यस्याःसा सवर्णा
सवर्णायाः अपत्यं पुमान् सावर्णिः समानः तुल्यः वर्णः स्वरूपं सवर्णायाः छायायाः सूर्य्यपत्न्याः महान्भागो यस्य सः

महामायानुभावेन यथामन्वन्तराधिपः ॥ सबभूवमहाभागस्सावर्णिस्तनयोरवेः २ स्वारोचि
षेन्तरेपूर्व्वंचैत्रवंशसमुद्भवः ॥ सुरथोनामराजाभूत्समस्तेक्षितिमण्डले ३ तस्यपालयतस्स

महाभागः भागः भाग्यं सःअष्टमःमनुः महामायानुभावेन महतीमाया यस्याःसा महामाया महामायायाःअनुभावःमहा
मायानुभावस्तेन महामायानुभावेन अनुभावः प्रभावः यथा येनप्रकारेण मन्वन्तराधिपः मन्वन्तरस्यअधिपः मन्वन्तरा
धिपः अधिपः स्वामी तथा तं प्रकारं २ स्वारोचिषेन्तरे इति हे मुने! स्वारोचिषेन्तरे पूर्व्वं चैत्रवंशसमुद्भवः सुरथः नाम
राजा समस्ते क्षितिमण्डले अभूत् स्वारोचिषेन्तरे स्वारोचिषाधिकारोपलक्षिते द्वितीये मन्वन्तरे पूर्व्वं कथाकालापे
क्षया चैत्रवंशसमुद्भवः चैत्रस्यवंशः चैत्रवंशः चैत्रवंशेसमुद्भवो यस्य सः चैत्रवंशसमुद्भवः चैत्रस्य चैत्रनाम्नः मनोः
समुद्भवः प्रादुर्भावः समस्ते सम्पूर्णे क्षितिमण्डले क्षितेःमण्डलं क्षितिमण्डलं तस्मिन् क्षितिमण्डले क्षितेः पृथिव्याः ३ 

तस्येति हे मुने! औरसान् पुत्रान् इव प्रजाः सम्यक् पालयतः तस्य तथा कोलाविध्वंसिनः भूपाः शत्रवः बभूवुः औरसान् स्वकीयान् सम्यक् नीतिशास्त्रानुसारेण पालयतः पालयतीति पालयन् तस्य पालयतः पालयाति रक्षति तस्य राज्ञः सुरथस्य तथा अतिशयेन कोलाविध्वंसिनः कोलाविध्वंसितुं शीलं येषां ते कोलाविध्वंसिनः कोला सुरथराजधानी शीलं स्वभावः भूपाः राजानः शत्रवः वैरिणः ४ तस्यतैरिति अतिप्रबलदण्डिनः तस्य तैःसहयुद्धं अभवत् न्यूनैः अपि तैः कोलाविध्वंसिभिः सहयुद्धेजितः अतिप्रबलदण्डिनः तस्य तैःसह युद्धम् अतिप्रबलश्चासौदण्डश्च अतिप्रबल

म्यक्प्रजाःपुत्रानिवौरसान् ॥ बभूवुःशत्रवोभूपाःकोलाविध्वंसिनस्तथा ४ तस्यतैरभवद्युद्धमति
प्रबलदण्डिनः ॥ न्यूनैरपिसतैर्युद्धेकोलाविध्वंसिभिर्ज्जितः ५ ततःस्वपुरमायातोनिजदेशाधि
पोभवत् ॥ आक्रान्तःसमहाभागस्तैस्तदाप्रबलारिभिः ६ अमात्यैर्बलिभिर्दुष्टैर्दुर्ब्बलस्यदु

दण्डः अतिप्रबलदण्डोस्यास्तीति अतिप्रबलदण्डी तस्य अतिप्रबलदण्डिनः अतिप्रबलदण्डकर्त्तुः तस्य राज्ञः सुरथस्य कोलाविध्वंसिभिः भूपैः युद्धं संग्रामं न्यूनैः अल्पसाधनैः कोलाविध्वंसिभिः राजभिः सः राजा सुरथः युद्धे संग्रामेइत्यर्थः ५ तत इति हे मुने! ततः तदा प्रबलारिभिः तैः आक्रान्तः महाभागः सः स्वपुरं आयातः सन् निजदेशाधिपः अभवत् ततः तदनन्तरं भङ्गानन्तरं पराजयानन्तरं तदा तस्मिन् काले प्रबलारिभिःप्रबलाश्च ते अरयश्च प्रबलारयः तैः प्रबलारिभिः प्रबलाः उद्धताः अरयः शत्रवः वैरिणः तैःकोलाविध्वंसिभिः राजभिः महान्भागो यस्य सःमहाभागःसःराजा ३

दु०टी० सुरथः स्वपुरं स्वस्यपुरं स्वपुरं तत् स्वपुरं स्वस्य स्वकीयस्य पुरं नगरं राजधानीम् निजदेशाधिपः निजश्चासौ देशश्च अ०
४ निजदेशः निजदेशस्य अधिपः निजदेशाधिपः निजः स्वकीयः अधिपः स्वामी ६ अमात्यैरिति हे मुने ! बलिभिः दुष्टैर्दु १
रात्मभिः अमात्यैः तत्र स्वपुरे अपि दुर्ब्बलस्य ततः कोशः अपहृतः किंच बलं अपहृतं इत्यन्वयः बलिभिः बलिष्ठैःदुष्टैः
दुष्टमतिभिः दुरात्मभिः दुष्टः आत्मा येषां ते दुरात्मानः तैर्दुरात्मभिः आत्मा अन्तःकरणं अमात्यैःप्रधानैः दुर्ब्बलस्य
क्षीणबलस्य ततः तस्यइति ततः तस्य राज्ञः सुरथस्य कोशः अर्थसंचयः अपहृतः आत्मसात्कृतः स्वाधीनः किंच बलं

रात्मभिः ॥ कोशोबलंचापहृतंतत्रापिस्वपुरेततः ७ ततोमृगयाव्याजेनहृतस्वाम्यस्सभूपतिः ॥
एकाकीहयमारुह्यजगामगहनंवनम् ८ सतत्राश्रममद्राक्षीद्द्विजवर्य्यस्यमेधसः ॥ प्रशान्त

सैन्यं अपहृतं आत्मसात्कृतमित्यर्थः ७ तत इति हे मुने ! ततः हृतस्वाम्यः भूपतिः सः एकाकी सन् मृगयाव्याजेन हयं
आरुह्य गहनं वनं जगाम ततः तदनन्तरं कोशसैन्याहरणानन्तरं हृतस्वाम्यः स्वामिनः भावः स्वाम्यं हृतं स्वाम्यं यस्य
सः हृतस्वाम्यः स्वामिनः प्रभोः भावः धर्म्मः भूपतिः भुवःपतिः भूपतिः भुवः पृथिव्याः पतिः स्वामी सः राजा सुरथः
एकाकी सन् असहायः सन् मृगयाव्याजेन मृगयायाः व्याजः मृगयाव्याजः तेन मृगयाव्याजेन मृगयायाः आखेटकस्य
व्याजः मिषं हयं मार्गं आरुह्य गृहीत्वा गहनं निविडं वनं अरण्यं ८ सतत्रेति हे मुने ! तत्र सः द्विजवर्य्यस्य मेधसः आश्रमं
अद्राक्षीत् कथंभूतं आश्रमंप्रशान्तश्वापदाकीर्णं पुनःकथंभूतं आश्रमं मुनिशिष्योपशोभितमित्यन्वयःतत्र तस्मिन् वने सः ४

राजासुरथःद्विजवर्य्यस्य द्विजेषुवर्य्यः द्विजवर्य्यः तस्य द्विजवर्य्यस्य द्विजेषुब्राह्मणेषुवर्यः श्रेष्ठःमेधसः सुमेधसःनाम्नःऋषेः आश्रमं अद्राक्षीत् प्रशान्तश्वापदाकीर्णं प्रशान्ताश्च ते श्वापदाश्च प्रशान्तश्वापदाः प्रशान्तश्वापदैः आकीर्णः प्रशान्त श्वापदाकीर्णः तं प्रशान्तश्वापदाकीर्णं प्रशान्ताः परहिंसारहिताः श्वापदाः व्याघ्रादयः आकीर्णं व्याप्तं मुनिशिष्योप शोभितं मुनेः शिष्याः मुनिशिष्याः मुनिशिष्यैरुपशोभितः मुनिशिष्योपशोभितः तं मुनिशिष्योपशोभितं मुनेः सुमेध सः उपशोभितं शोभायमानं ९ तस्थाविति हे मुनिवर ! किञ्च तेन मुनिना सत्कृतः सः तस्मिन् आश्रमे इतश्च इतश्च

श्वापदाकीर्णंमुनिशिष्योपशोभितम् ९ तस्थौकिञ्चित्सकालंच मुनिनातेनसत्कृतः ॥ इतश्चेतश्च
विचरंस्तस्मिन्मुनिवराश्रमे १० सोचिन्तयत्तदातत्र ममत्वाकृष्टचेतनः ॥ मत्पूर्वैःपालितंपूर्व्वं

विचरन् सन् किंचित्कालं तस्थौ हे मुनिवर, मुनिषु वरः मुनिवरः तत्सम्बोधने हे मुनिवर ! वरः श्रेष्ठः तेन मुनिना मे धसा सः राजा सुरथः तस्मिन् आश्रमे किंचित्कालं तस्थौ स्थितवान् १० सोचिन्तयदिति हे मुने!ममत्वाकृष्टचेतनःसः तत्र तदाइति अचिन्तयत् इतीति किं असद्वृत्तैः तैर्मद्भृत्यैःपूर्व्वं मत्पूर्व्वैः पालितं इदानीं मयाहीनं तत्पुरं धर्म्मतः पा ल्यते वा न पाल्यते अहं न जानामि उत्तरश्लोकेनान्वयः ममतया आकृष्टा चेतना बुद्धिः सः राजासुरथः तत्र तस्मिन् आश्रमे तदा तस्मिन् काले इतीति किं असद्वृत्तैः असत् वृत्तं येषां ते असद्वृत्ताः तैः असद्वृत्तैः असत् असमीचीनं वृत्तं आचरणं मद्भृत्यैः ममभृत्याः मद्भृत्याः तैर्मद्भृत्यैः भृत्याःसेवकाः प्रधानाः मत्पूर्व्वैः ममपूर्व्वाः तैः मत्पूर्व्वैः पूर्व्वाः

दु॰टी॰ पितृपितामहप्रपितामहादयः पालितं रक्षितं इदानीं अद्य हीनं रहितं पुरं नगरं राजधानीम् धर्म्मादिति धर्म्मतः पाल्य अ॰
६ ते रक्ष्यते वा अथवा न पाल्यते हीति निश्चयेन किंच सप्रधानः सदामदः मे शूरहस्ती ममवैरिवशंयातः सन् कान् भो १
गानुपलप्स्यते अहं न जाने सप्रधानः प्रधानैः सह वर्त्तमानः सप्रधानः प्रधानैः अमात्यैः सह वर्त्तमानः युक्तः सदामदः
सदामदो यस्य सः सदामदः सदासर्व्वदा मे ममशूरहस्ती शूरश्चासौहस्तीच शूरहस्ती द्वयोरर्थः ११।१२ ममवैरिवशं
यातः वैरिणां वशः वैरिवशः तं वैरिवशं वैरिणां शत्रूणां वशः पारतन्त्र्यं यातःसन् प्राप्तःसन् कान् कियतः कीदृशान् वा

मयाहीनंपुरंहितत् ११ मद्भृत्यैस्तैरसद्वृत्तैर्द्धर्म्मतःपाल्यतेनवा॥नजानेसप्रधानोमे शूरहस्तीसदा
मदः१२ममवैरिवशंयातःकान्भोगानुपलप्स्यते॥ येममानुगतानित्यं प्रसादधनभोजनैः१३अनु

उपलप्स्यते प्राप्स्यते किंच ये पूर्व्वं प्रसादधनभोजनैः मम नित्यं अनुगताः अद्य अन्यमहीभृतां अनुवृत्तिं कुर्व्वन्ति ध्रु
वं इति वितर्के हा मां धिक् इति अध्याहारः सार्द्धश्लोकेनान्वयः ये सेवकाः प्रसादधनभोजनैः प्रसादश्च धनंच भोज
नञ्च तानि प्रसादधनभोजनानि तैः प्रसादधनभोजनैः प्रसादः तुष्टिदानं धनं मासादिवेतनं भोजनं प्रतिदिनं दीय
मानं नित्यं सर्व्वदा अनुगताः प्राप्ताः सेवकाः अद्य इदानीं अन्ये च ते महीभृतश्च अन्यमहीभृतः तेषां अन्यमही
भृताम् महीभृतः राजानः अनुवृत्तिं सेवां हा इति खेदे धिक् धिक्कारोस्ति १३ असम्यगिति हे मुने! किंच ६

दु० टी० अतिदुःखेन संचितः सः कोशः असम्यग्व्ययशीलैः व्ययं सततं कुर्वद्भिः तैः क्षयं गमिष्यति सार्द्धश्लोकेनान्वयः अ०
७ अतिदुःखेन अतिकष्टेन संचितः सम्पादितः कोशः अर्थसंचयः असम्यग्व्ययशीलैः न सम्यक्व्ययः असम्यग्व्ययः १
असम्यग्व्यये शीलं येषां ते असम्यग्व्ययशीलाः तैः असम्यग्व्ययशीलैः सम्यक् विधिवत् शीलं स्वभावः सततं निर
न्तरं कुर्वद्भिः कुर्वन्तीति कुर्वन्तः तैः कुर्वद्भिः तैः अमात्यैः क्षयं नाशं गमिष्यति प्राप्स्यति १४ हे मुने! किंच ए
तत् किंच अन्यत् पार्थिवः सततं चिन्तयामास अर्द्धश्लोकेनान्वयः एतत्सर्व्वं अन्यत् अन्यपदार्थं पार्थिवः पृ

वृत्तिंध्रुवंतेद्य कुर्व्वन्त्यन्यमहीभृताम् ॥ असम्यग्व्ययशीलैस्तैःकुर्व्वद्भिःसततंव्ययम् १४ स
ञ्चितःसोतिदुःखेन क्षयंकोशोगमिष्यति ॥ एतच्चान्यच्चसततं चिन्तयामासपार्थिवः १५ तत्रवि
प्राश्रमाभ्याशेवैश्यमेकंददर्शसः ॥ सपृष्टस्तेनकस्त्वंभोहेतुश्चागमनेत्रकः १६ सशोकइवकस्मा

थिव्याः ईश्वरः पार्थिवः पृथिव्याः भूमेरीश्वरः स्वामी पार्थिवः राजा सुरथः सततं निरन्तरमित्यर्थः १५ तत्रेति हे विप्र!
सः तत्र आश्रमाभ्याशे एकं वैश्यं ददर्श तेन सः पृष्टः भोः त्वं कः असि किंच अत्र आगमने कः हेतुः भवति सः राजा सुरथः
तत्र तस्मिन् आश्रमाभ्याशे आश्रमस्य अभ्याशः आश्रमाभ्याशः तस्मिन् आश्रमाभ्याशे अभ्याशः निकटं तत्र तस्मि
न् आश्रमाभ्याशे एकं एकाकिनं तेन राज्ञा सुरथेन सः वैश्यः कोहेतुः भवति किं प्रयोजनं भवति १६ सशोक इति किंच
मया त्वं कस्मात् सशोकःइव किंच दुर्म्मनाःइवलक्ष्यसे प्रणयोदितं भूपतेः तस्य इति वचः आकर्ण्य प्रश्रयावनतः स वै ७

इयः नृपं तं प्रत्युवाच कस्मात् कस्माद्धेतोः सशोकः शोकेनसह वर्त्तमानः सशोकः इव वर्त्तमानः युक्तः दुर्म्मनाः दुःखितं मनो यस्यसः दुर्म्मनाः मनः अन्तःकरणं प्रणयोदितं प्रणयेन प्रीत्याउदितं उक्तं भूपतेः भुवःपतिः भूपतिः तस्यः भूपतेः भुवः पृथिव्याः पतिः स्वामी तस्य राज्ञः सुरथस्यवचः वाक्यं आकर्ण्य श्रुत्वा प्रश्रयावनतः प्रश्रयेण अवनतःप्रश्रयावनतः प्रश्रयेण विनयेन अवनतः नम्रीभूतः नृपः नॄनपातीति नृपः तंनृपं नॄन् जनान् पाति रक्षति तं राजानं सुरथं १७ मार्कण्डेयेति सुरथंप्रति ऋष्युक्तावनुदितायां भागुरेः किं वैश्यउवाचेति जिज्ञासामालम्ब्य मार्कण्डेयमाह वैश्यउवाच॥समा

स्त्वंदुर्म्मनाइवलक्ष्यसे ॥ इत्याकर्ण्यवचस्तस्यभूपतेःप्रणयोदितम् १७ प्रत्युवाचसतंवैश्यःप्रश्र
यावनतोनृपम् ॥ वैश्यउवाच ॥ समाधिर्नामवैश्योहमुत्पन्नोधनिनांकुले १८ पुत्रदारैर्निरस्तश्च
धनलोभादसाधुभिः ॥ विहीनःस्वजनैर्दारैःपुत्रैरादायमेधनम् १९ वनमभ्यागतोदुःखीनिरस्त

धिरिति हे राजन्! अहं समाधिर्नामवैश्यः विशोभावः इति वैश्यः भवाद्यर्थे अण् प्रत्ययः धनमस्ति येषां ते धनिनःतेषां धनिनां धनिनांधनाढ्यानां कुले वंशे उत्पन्नः प्रादुर्भूतः पुनः कथम्भूतः असाधुभिः न साधवः असाधवः तैः असाधुभिः साधवः सज्जनाः असाधुभिः दुष्टैः पुत्रदारैः पुत्राश्च दाराश्च ते पुत्रदाराः तैः पुत्रदारैः दाराः कलत्राणि धनलोभात् धनस्यलोभः धनलोभः तस्मात् धनलोभात् धनस्य द्रव्यस्य निरस्तः निरस्कृतः १८ विहीनश्चेति हे राजन्! अहं दुःखीसन् वनं आगतः कथम्भूतः अहं दारैः किंच पुत्रैः मेधनंआदाय निरस्तः पुनः कथम्भूतः अहं धनैःविहीनः पुनः कथम्भूतः अहं

धनहीनत्वात् आप्तबन्धुभिःनिरस्तः इत्यन्वयः आगतः आगतोस्मि दारैः कलत्रैः मे मम आदाय गृहीत्वा निरस्तः त्यक्तः
६ धनैः द्रव्यैः विहीनः रहितः आप्तबन्धुभिः आप्ताश्च बन्धवश्च ते आप्तबन्धवः तैः आप्तबन्धुभिः आप्ताःमित्राणि बन्धवः १
भ्रातरः निरस्तः दूरीकृतः १९ सोहमिति हे राजन् ! सःअहं अत्रसंस्थितः सन् पुत्राणां किंच स्वजनानां किंच दाराणां कुशलाकुशलात्मिकां प्रवृत्तिं न वेद्मि अत्र अस्मिन् आश्रमे दाराणां कलत्राणां कुशलाकुशलात्मिकां कुशलश्च अकुशलश्च कुशलाकुशलौ कुशलाकुशलौ आत्मानौ यस्याः सा कुशलाकुशलात्मिका तां कुशलाकुशलात्मिकां कुशलः

श्चाप्तबन्धुभिः ॥ सोहंनवेद्मिपुत्राणांकुशलाकुशलात्मिकाम् २० प्रवृत्तिंस्वजनानांचदाराणांचा त्रसंस्थितः ॥ किन्नुतेषांगृहेक्षेममक्षेमंकिन्नुसांप्रतम् २१ कथन्तेकिन्नुसद्वृत्तादुर्वृत्ताःकिन्नुमेसुताः ॥ राजोवाच ॥ यैर्निरस्तोभवाँल्लुब्धैःपुत्रदारादिभिर्धनैः २२ तेषुकिंभवतस्स्नेहमनुबध्नाति

शुभं अकुशलः अशुभम् आत्मानौ स्वरूपे प्रवृत्तिं वार्त्तां न वेद्मि न जानामि २० तामेव विवृणोति किन्न्विति हे राजन् ! सांप्रतं तेषां गृहेक्षेमं अस्ति किन्नु कथन्ते मे सुताः सद्वृत्ताः सन्ति किन्नु दुर्वृत्ताः सन्ति किन्नु सांप्रतंइदानीं तेषां पुत्रदार स्वजनानां क्षेमं कुशलं अक्षेमंअकुशलं कथं किंविधाः मे ममसुताः पुत्राः सद्वृत्ताः सत्वृत्तं येषांते सद्वृत्ताः सत्समीचीनं वृत्तं व्यवहारः दुर्वृत्ताः दुष्टंवृत्तं येषांते दुर्वृत्ताः वृत्तं व्यवहारः २१ राजोवाच यैरिति हे वैश्यवर्य्य! धनैः लुब्धैःपुत्र दारादिभिःयैर्भवान् निरस्तःतेषु भवतःमानसंस्नेहं किं अनुबध्नाति धनैः द्रव्यैःलुब्धैः लोभायमानैः पुत्रदारादिभिः पुत्रा ६

दु० टी० श्च दाराश्च ते पुत्रदाराः पुत्रदाराः आदिर्येषां ते पुत्रदारादयः तैः पुत्रदारादिभिः दाराः कलत्राणि भवान् त्वं निरस्तः अ०
१० दूरीकृतः निष्कृतः २२ तेषुपुत्रदारस्वजनेषु भवतः तव मानसं मनः अन्तःकरणं स्नेहं प्रीतिं किं अनुबध्नाति अहं १
किं करोमि भवान् त्वं अस्मद्गतं अस्मदीयविषयकं वचः वाक्यं एवं एतत् तथैवास्ति मनः अन्तःकरणं निष्ठुरतां नि
ष्ठुरस्यभावःनिष्ठुरता तां निष्ठुरताम् निष्ठुरस्य कठोरस्य भावःधर्म्मः न बध्नाति न करोति किंकरोमि२३यैरिति हेराजन्!
धनलुब्धैः यैः पितृस्नेहं किंच पतिस्वजनहार्दं सन्त्यज्य अहं निराकृतः तेषु मे मनः हार्देषुच धनलुब्धैः धनैः लुब्धाः

तिमानसम् ॥ वैश्यउवाच ॥ एवमेतद्यथाप्राहभवानस्मद्गतंवचः २३ किंकरोमिनबध्नातिमम
निष्ठुरताम्मनः ॥ यैःसन्त्यज्यपितृस्नेहंधनलुब्धैर्निराकृतः २४ पतिस्वजनहार्दञ्च हार्दितेष्वेवमे

धनलुब्धाःतैःधनलुब्धैः लुब्धाःलोभायमानाः यैःपुत्रदारस्वजनैःपितृस्नेहं पितुःस्नेहःपितृस्नेहः तं पितृस्नेहंस्नेहःप्रीतिः
पतिस्वजनहार्दं पतिश्चस्वजनश्च पतिस्वजनौ पतिस्वजनयोः हार्दं पतिस्वजनहार्दं तत् पतिस्वजनहार्दं पतिः स्वामी
स्वजनःबन्धुवर्ग्गःहार्दं स्नेहः संत्यज्य त्यक्त्वा निराकृतः दूरीकृतःतेषु पुत्रदारस्वजनेषु मनःअन्तःकरणं हार्दंच स्नेहयुक्त
मेव २४ किमेतदिति हे महामते! हे राजन्! तेषां दोषं जानन्नपि अहं यत् विगुणेषु अपि बन्धुषु प्रेमप्रवणं चित्तं करो
मि एतत् किं अहं न अभिजानामि हे महामते, महती मतिर्यस्य सः महामतिः तत्सम्बोधने हे महामते! मतिःबुद्धिः
तेषां पुत्रदारस्वजनानां जानन् जानातीति जानन् विगणेभ्यः विगतः गुणो येभ्यः ते विगुणाः तेषु विगुणेषु बन्धुषु भ्रा १०

तृषु प्रेमप्रवणं प्रेम्णा प्रवणं प्रेमप्रवणं तत् प्रेमप्रवणं प्रेम्णा प्रीत्या प्रवणं आसक्तं चित्तं अन्तःकरणं किमस्ति न अभिजानामि न जानामि २५ तेषामिति हे राजन्! तेषां कृते मे निःश्वासः किंच दौर्मनस्यं जायते यत् अप्रीतिषु तेषु अपि मनः निष्ठुरं न भवति किंकरोमि तेषां पुत्रदारस्वजनानां कृतेनिमित्ते अर्थे मे मम दुःखितं मनो यस्य सः दुर्म्मनाः दुर्म्मनसो भावः दौर्मनस्यं मनः अन्तःकरणं अप्रीतिषु नास्ति प्रीतिर्येषां ते अप्रीतयः तेषु अप्रीतिषु तेषु पुत्रदारस्वजनेषु मनः अन्तःकरणं निष्ठुरं कठोरं न भवति २६ मार्कण्डेयउवाच तत इति हे विप्र! हे द्विज! हे मुने! ततः सहितौ मुनिं

मनः ॥ किमेतन्नाभिजानामिजानन्नपिमहामते २५ यत्प्रेमप्रवणंचित्तंविगुणेष्वपिबन्धुषु ॥ तेषां कृतेमेनिःश्वासोदौर्म्मनस्यंचजायते २६ करोमिकिंयन्नमनस्तेष्वप्रीतिषुनिष्ठुरम् ॥ मार्कण्डेयउवाच ॥ ततस्तौसहितौविप्रतंमुनिंसमुपस्थितौ २७ समाधिर्न्नामवैश्योसौसचपार्थिवसत्तमः ॥

तं समुपस्थितौ द्वौकौ एकः समाधिः नाम असौ वैश्यः किंच अपरः पार्थिवसत्तमः स इत्यन्वयः ततः तदनन्तरं परस्परभाषणानन्तरं सहितौ मित्रत्वेन संगतौ तौ द्वौ तं मेधसं समुपस्थितौ समुपपन्नौ प्राप्तौ समाधिर्नाम वैश्यः असौ अपरः अन्यः पार्थिवसत्तमः पृथिव्याः ईश्वरः पार्थिवः पार्थिवेषु सत्तमः पार्थिवसत्तमः पृथिव्याः भूमेः ईश्वरः स्वामी पार्थिवेषु राजसु सत्तमः श्रेष्ठः सः राजा सुरथः इत्यर्थः २७ कृत्वेति हे मुने! यथान्यायं तु पुनः यथार्हन्तेनसंविदं कृत्वा उपविष्टौ तौ वैश्यपार्थिवौ काश्चित्कथाः चक्रतुः यथान्यायं यथाशास्त्रं यथायोग्यं तेन मुनिना संविदं भाषां उपविष्टौ

संस्थितौ पृथिव्याः ईश्वरः पार्थिवः वैश्यश्च पार्थिवश्च तौ वैश्यपार्थिवौ पृथिव्याः भूमेः ईश्वरः स्वामी पार्थिवः राजा
सुरथः काश्चित् स्वपरविषयाः कथावार्त्ताः २८ राजोवाचभगवन्निति हे भगवन्! अहं त्वां एकं प्रष्टुमिच्छामि तदाह स्व
चित्तायत्ततां विना मे मनसः यत् दुःखं भवति तत् त्वं वदस्व हे मुने! एकं रहस्यं तदाह स्वचित्तायत्ततां विना आय
त्तस्य भावः आयत्तता स्वस्यचित्तं स्वचित्तं स्वचित्तस्यआयत्तता स्वचित्तायत्तता आयत्तस्य पराधीनस्य भावः धर्मः चि
त्तंअन्तःकरणं आयत्तता निरोधः विना रहिता मे मम मनसः अन्तःकरणस्य वदस्व कथयस्व २९ दुःखहेतुमाह

कृत्वातुतौयथान्यायंयथार्हन्तेनसंविदम् २८ उपविष्टौकथाःकाश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ राजो
वाच ॥ भगवंस्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतत् २९ दुःखाययन्मेमनसःस्वचित्तायत्ततांवि
ना ॥ ममत्वंममराज्यस्यराज्याङ्गेष्वखिलेष्वपि ३० जानतोपियथाज्ञस्यकिमेतन्मुनिसत्तम ॥ म

ममत्वमिति हे मुनिसत्तम! राज्यस्य किंच अखिलेषु अमदीयत्वं जानतः अपि मम अज्ञस्य यथा ममत्वं भवति एतत्
किं भवति इत्यन्वयः मुनिषु सत्तमः तत्सम्बोधने हे मुनिसत्तम! सत्तमः श्रेष्ठः राज्यस्येति सप्तम्यर्थेस्य शेषत्वविवक्षायां
षष्ठी राज्ये इत्यर्थः राज्यस्य राज्ये अखिलेषु समस्तेषु राज्याङ्गेषु राज्यस्य अङ्गानि राज्याङ्गानि तेषु राज्याङ्गेषु अङ्गा
नि स्वाम्यमात्यादीनि अमदीयत्व नमदीयः अमदीयः अमदीयस्य भावः अमदीयत्वं भावः धर्म्मः जानतः जानातीति
जानन् तस्य जानतः जानातीतिज्ञः नज्ञः अज्ञः तस्य अज्ञस्य यथा पुत्रार्थे ममत्वंममता ३० नाहमेव तथा अयमपीत्याह

दु०टी० अयंचेति हे मुने! यद्यपि पुत्रैः किंच दारैः निष्कृतः तथा भृत्यैः उज्झितः किंच स्वजनेन संत्यक्तः अयं तथापि तेषु अति अ० १
१३ हार्दी भवतीत्यन्वयः दारैःकलत्रैः निष्कृतः निराकृतः भृत्यैः सेवकैः उज्झितः त्यक्तः स्वजनेन बन्धुजनेन संत्यक्तः दूरी
कृतः अयं वैश्यः तेषु पुत्रदारस्वजनादिषु अति अत्यन्तं हार्दी स्नेहयुक्तः ३१ हे मुने! एवम् दृष्टदोषे अपि विषये
ममत्वाकृष्टमानसौ अपि द्वौ अत्यन्तदुःखितौ भवतः द्वौ कौ एकः एषः तथाच अपरःअहं इत्यन्वयः एवम्पूर्वोक्त
प्रकारेण दृष्टःदोषो यस्मिन् सःदृष्टदोषः तस्मिन् दृष्टदोषे विषये राज्यपुत्रादेर्ममत्वाकृष्टमानसौ ममत्वेन आकृष्टं

यंचनिष्कृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झितः ३१ स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्यति॥एवमेषतथा
हंचद्वावप्यत्यन्तदुःखितौ ३२दृष्टदोषेपिविषयेममत्वाकृष्टमानसौ॥ तत्केनैतन्महाभागयन्मोहो
ज्ञानिनोरपि ३३ ममास्यचभवत्येषाविवेकान्धस्यमूढता॥ ऋषिरुवाच॥ ज्ञानमस्तिसमस्त

मानसं ययोस्तौ ममत्वाकृष्टमानसौ ममत्वेन ममतया आकृष्टं विषयाधीनं कृतं मानसं अन्तःकरणं एकः एषः वैश्यः
तथाच तथैव अपरः अन्यः ३२ तत् किमिति हे महाभाग! हे मुने! ज्ञानिनोः अपि मम किंच अस्य यत् मोहःभवति एषा
एतत् मूढता अविवेकान्धस्य भवति ज्ञानमस्ति ययोः तौ ज्ञानिनौ तयोः ज्ञानिनोः अस्य वैश्यस्य मोहः अज्ञानं केन
प्रकारेण एतज्जातीया मूढता मूढस्यभावः मूढता मूढस्य अज्ञानिनः भावः धर्म्मः अविवेकान्धस्य न विवेकःअविवेकः
अविवेकेन अन्धः अविवेकान्धःतस्य अविवेकान्धस्य ३३ अत्रान्तरमाह ऋषिरुवाच हे महाभाग! हे राजन्! विषयगोचरे १३

दु०टी० समस्तस्य जन्तोर्ज्ञानं अस्ति एवंविषयः समस्तस्य सर्व्वस्य जन्तोः प्राणिनः एवं वक्ष्यमाणप्रकारेण पृथक् भिन्नप्रकारे अ०
१४ ण ज्ञातिज्ञानविषयत्वं प्राप्नोतीत्यर्थः ३४ तदेवाह दिवान्धा इति हे राजन् ! केचित् प्राणिनः दिवा अन्धाःभवन्ति १
तथा अपरे प्राणिनः रात्रौ अन्धाः भवन्ति केचित् प्राणिनः दिवा तथा रात्रौ तुल्यदृष्टयः भवन्ति प्राणिनः प्रा
णोऽस्ति येषां ते प्राणिनः प्राणिनः उलूकादयः दिवा दिने अन्धाः ज्ञानभाववन्तः अपरे अन्ये प्राणिनः काकादयः अ
न्धाः ज्ञानाभाववन्तः प्राणिनः किंचोलूकादयः माज्जीरादयश्च दिवा दिवसे तुल्यदृष्टयः तुल्यादृष्टिर्येषां ते तुल्यदृष्टयः

स्यजन्तोर्व्विषयगोचरे ३४ विषयश्चमहाभागयातिचैवंपृथक्पृथक् ॥ दिवान्धाःप्राणिनःकेचि
द्रात्रावन्धास्तथापरे ३५ केचिद्दिवातथारात्रौप्राणिनस्तुल्यदृष्टयः ॥ ज्ञानिनोमनुजाःसत्यंकिन्तुतेन

तुल्या समाना तुल्यदृष्टयः अन्धाः अनन्धाश्च ३५ ननु मनुष्या एव मे ज्ञानित्वेनाभिमताश्चेत्यत्राह ज्ञानिन इति
हे राजन् ! मनुजाःज्ञानिनःभवन्ति ते सत्यं भवन्ति ते ज्ञानिनः केवलं भवन्ति किन्तु भवन्तीत्यर्थः किन्तु अज्ञानसंव
लितज्ञानिनो भवन्तीत्यर्थः कुतः यतः सर्वे पशुपक्षिमृगादयः हि ज्ञानिनो भवन्तीत्यन्वयः मनुजाः मनुष्याः ज्ञानिनः ज्ञा
नमस्ति येषां ते ज्ञानिनः ते मनुजाः मनुष्याः ज्ञानिनः केवलं ज्ञानिनः एव हीति निश्चयेन भवन्तीत्यर्थः अज्ञानसं
वलितज्ञानिनो भवन्तीत्यर्थः कुतः कस्मात् कारणात् यस्मात्कारणात् यतः सर्व्वे सम्पूर्णाः पशुपक्षिमृगादयः पशुश्च १४

पक्षीच मृगश्च ते पशुपक्षिमृगाः पशुपक्षिमृगाः आदिर्येषांते पशुपक्षिमृगादयः हीति निश्चयेन ज्ञानिनो भवन्तीत्यर्थः ३६
ज्ञानंचात हे राजन्! किंच यत् ज्ञानं मनुष्याणां भवति तत् ज्ञानं तेषां मृगपक्षिणां भवति किंच यत् मनुष्याणां भवति तत्
तेषां भवति तथा अन्यत् उभयोःतुल्यं भवति यत् यादृशं ज्ञानं तत् तादृशं ज्ञानं तेषां मृगपक्षिणां मृगाश्चपक्षिणश्च ते मृगप
क्षिणःतेषां मृगपक्षिणां किंच यत् गमनादिकं तत् तेषां मृगपक्षिणां अन्यदाहारादिकं उभयोः मनुष्यपक्षिणोः तुल्यंधारण
सदृशमित्यर्थः तथा आहारनिद्राभयमैथुनंच समानमेतत्पशुभिर्नराणाम् । ज्ञानंविशेषोप्यधिकोनराणां ज्ञानेनहीनाः प

हिकेवलम् ३८ यतोहिज्ञानिनःसर्व्वेपशुपक्षिमृगादयः॥ ज्ञानञ्चतन्मनुष्याणांयत्तेषांमृगपक्षिणा
म् ३७ मनुष्याणाञ्चयत्तेषांतुल्यमन्यत्तथोभयोः॥ ज्ञानेऽपिसतिपश्यैतान्पतङ्गाञ्छावचञ्चुषु ३८
कणमोक्षादृतान्मोहात्पीड्यमानानपिक्षुधा॥ मानुषामनुजव्याघ्रसाभिलाषाःसुतान्प्रति ३९ लो

शुभिः समाना इत्यर्थः ३७ अर्थक्रियासाम्यं तयोरपीत्याह ज्ञानेपीति हे राजन्! ज्ञानेसत्यपि त्वं एतान्पतङ्गान् पश्य
कथंभूतान् पतङ्गान् मोहात् शावचञ्चुषु कणमोक्षादृतान् पुनः कथंभूतान् क्षुधा अपि पीड्यमानान् इत्यन्वयः पतङ्गान्
पक्षिणः पश्य शावचञ्चुषु शावानांचञ्चवः शावचञ्चवः तेषु शावचञ्चुषु शावानां बालकानां कणमोक्षादृतान् कणानांमो
क्षःकणमोक्षःकणमोक्षे आदृताःकणमोक्षादृतास्तान् कणमोक्षादृतान् मोक्षःदानं आदृतास्तत्पराःपीड्यमानान् पीड्यन्ते
इति पीड्यमानाः तान् पीड्यमानान् ३८ स्वशरीरापेक्षायां बहिरङ्गे अपि अतिप्रीतिरिति तेषु मोहाज्ञानयोःसामानाधिक

 

रण्यमुत्पाद्य मनुष्येष्वप्याह मानुषा इति हे मनुजव्याघ्र! हे राजन्! मनुषाः लोभात्सुतान् प्रति साभिलाषाःभवन्ति एतेतु
प्रत्युपकाराय नभवन्ति इदं त्वं किन्न पश्यसि हे मनुजव्याघ्र, मनुजेषु व्याघ्रः मनुजव्याघ्रः तत्सम्बोधने हे मनुजव्याघ्र!
मनुजेषु मनुष्येषु व्याघ्रः श्रेष्ठः मानुषाः मनुष्याः लोभात् प्रत्युपकारलोभात् सुतान् पुत्रान् साभिलाषाः वर्त्तमाना युक्ताः एतेसुताः पुत्राः ननु निश्चयेन न पश्यसि ३९ नन्वेवंविधव्यवहारदर्शिनां संसारे विरतिः कुलीनेत्यत आह तथापीति हे राजन्! एवंविधलोकस्य व्यवहारः साक्षात्कारो भवति यद्यपि तथा महामायाप्रभावेन ममतावर्त्ते मोहगर्त्ते

भात्प्रत्युपकारायनन्वेतेकिंनपश्यसि॥तथापिममतावर्त्तेमोहगर्त्तेनिपातिताः४०महामायाप्रभावे
नसंसारस्थितिकारिणः॥ तन्नात्रविस्मयःकार्य्योयोगनिद्राजगत्पतेः ४१ महामायाहरेश्चैवतया

निपातिताः मनुष्याः संसारस्थितिकारिणः भवन्तीत्यन्वयः महती माया यस्याःसा महामाया तस्याः प्रभावः महामायाप्रभावः तेन महामायाप्रभावेन प्रभावः अनुभावः ममतावर्त्ते ममतैव आवर्त्त इव यस्मिन् सः ममतावर्त्तः तस्मिन् ममतावर्त्ते आवर्त्तः भ्रमः मोहगर्त्ते मोहएव गर्त्तः मोहगर्त्तः तस्मिन् मोहगर्त्ते गर्त्तः ह्रदः मानुषाः मनुष्याः संसारस्थितिकारिणः संसारे स्थितिः संसारस्थितिःसंसारस्थितिं कुर्वन्तीति संसारस्थितिकारिणः संसारे भवसागरे ४० ननुमायायाः साश्चर्य्येयंशक्तिरतआह तदिति हे राजन्! तत्त्वया अत्र विस्मयः न कार्य्यः किंच जगत्पतेः हरेः या योगनिद्रा महामाया भवति तया एतत् जगत्संमोह्यते तत् तस्मात्कारणात् अत्र अस्मिन् विषये विस्मयः आश्चर्य्यः जगत्पतेः ज

दु० टी० गतांपतिः जगत्पतिः तस्य जगत्पतेः जगतां चतुर्दशलोकानां पतिः स्वामी हरेः विष्णोः या योगनिद्रा तमःप्रधानशक्तिः अ०
१७ महामाया महतीमाया यस्याःसा महामाया तया महामायया ४१ भवादृशानां संसारिणां का वार्त्ता अकृष्टविषयाणां १
योगिनां अपि सा मोहिकेत्याह ज्ञानिनामपीति हे राजन्! देवी भगवती महामाया ज्ञानिनां अपि चेतांसि बलात् मोहा
य हि प्रयच्छति देवी दीव्यति इति देवी दीव्यति दीप्यमाना भगवती भगमस्ति यस्याःसा भगवती भगं षडैश्वर्य्यं महा
माया महतीमाया यस्याःसा महामाया महती अघटितघटना पटीयसी ज्ञानिनां ज्ञानमस्ति येषांते ज्ञानिनः तेषां ज्ञा

संमोह्यतेजगत् ॥ ज्ञानिनामपिचेतांसिदेवीभगवतीहिसा ४२ बलादाकृष्यमोहायमहामायाप्रय
च्छति ॥ तयाविसृज्यतेविश्वंजगदेतच्चराचरम् ४३ सैषाप्रसन्नावरदानृणांभवतिमुक्तये ॥ सावि

निनां चेतांसि मनांसि बलात् बलात्कारात् हीति निश्चयेन प्रयच्छति मोहितं करोतीत्यर्थः ४२ तत्कुत इत्यत आह तयेति
हे राजन्! तया विश्वं चराचरं एतत् जगत् विसृज्यते किंच सा एषा मुक्तये उपासनादिभिः स्थापितनित्यकर्म्मादिभिश्च
प्रसन्ना सती नृणां वरदा भवतीत्यन्वयः तया महामायया विश्वं समस्तं चराचरं स्थावरजङ्गमात्मको विसृज्यते उत्पा
द्यते एषा महामाया मुक्तये मोक्षाय नृणां मनुष्याणां वरदा वरं ददातीति वरदा वरः वरदानमित्यर्थः ४३ नन्वेकस्यैव व
स्तुनो बन्धमोक्षोभयहेतुतानुपपन्नेत्यत आह साविद्येति हे राजन्! सा परमा विद्या भवति किंच मुक्तेर्हेतुभूता भवति १७

 किंच सनातनी भवति संसारबन्धहेतुर्भवति सा एव सर्व्वेश्वरेश्वरी भवतीत्यन्वयः सा महामाया परमा उत्तमपुरुषार्थ 
साधनीभूता विद्या ब्रह्मज्ञानरूपा सनातनी अनादिः संसारबन्धहेतुः संसारस्य बन्धः संसारबन्धः संसारबन्धस्य हेतुः संसारबन्धहेतुः हेतुः हेतुभूता सा एव महामाया एव सर्व्वेश्वरेश्वरी सर्व्वेषां ईश्वरः सर्व्वेश्वरः सर्व्वेश्वरस्य ईश्वरी सर्व्वेश्वरेश्वरी सर्व्वेषां ब्रह्मादीनां ईश्वरः स्वामी सर्व्वेश्वरस्य सदाशिवस्य ईश्वरी ईश्वरत्वसम्पादिका इत्यर्थः ४४ विशेषजिज्ञासया पुनःपृच्छतीति राजोवाच हेभगवन्! हे द्विज! यां देवीं महामायां इति हि ब्रवीषि सा का भवति किंच

विद्यापरमामुक्तेर्हेतुभूतासनातनी ४४ संसारबन्धहेतुश्चसैवसर्व्वेश्वरेश्वरी ॥ राजोवाच ॥ भगवन्काहिसादेवीमहामायेतियांभवान् ४५ ब्रवीतिकथमुत्पन्नासाकर्म्मास्याश्चकिंद्विज ॥ यत्प्रभावाचसादेवीयत्स्वरूपायदुद्भवा ४६ तत्सर्व्वंश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर ॥ ऋषिरुवा

सा कथं उत्पन्ना भवति अस्याः कर्म्म किं भवतीत्यन्वयः भवान् त्वं यां देवीं हीति निश्चयेन सा देवी कथं केनप्रकारेण अस्याः देव्याः ४५ यत्प्रभावेति हे ब्रह्मविदांवर! सादेवी यत्प्रभावा भवति किंच यत्स्वरूपा भवति किंच यदुद्भवा भवति तत्सर्व्वं अहं त्वत्तः श्रोतुं इच्छामीत्यन्वयः हे ब्रह्मविदांवर,ब्रह्मविदन्तीति ब्रह्मविदः तेषां ब्रह्मविदां विदन्ति जानन्ति वरः श्रेष्ठः तत्सम्बोधने हे ब्रह्मविदांवर! यत्प्रभावा यत् प्रभावो यस्याःसा यत्प्रभावा यत् ईदृशः यत् स्वरूपं यस्याः सा यत्स्वरूपा यत् ईदृशं यदुद्भवा यत् उद्भवो यस्यास्सा यदुद्भवा यत् ईदृशः उद्भवः प्रादुर्भावः तत्सर्व्वम् ४६ उत्तरयति 

 ऋषिरुवाच ॥ नित्यैवसेति हे राजन्!जगन्मूर्त्तिः सा नित्या एव भवति तया यद्यपि सर्व्वं इदं ततं तथापि त्वया तत् 
समुत्पत्तिः बहुधा मम श्रूयतां इत्यन्वयः जगन्मूर्त्तिः जगदाश्रयभूताशक्तिः सा महामाया तया महामायया सर्व्वं समस्तं
इदं जगत् ततं विस्तारितं तत्समुत्पत्तिः तस्याः समुत्पत्तिः तत्समुत्पत्तिस्तस्याः महामायायाः समुत्पत्तिः प्रादुर्भावः
बहुधा अनेन प्रकारेण मम मत्तः'ममेत्यपादानस्यशेषत्वविवक्षायांषष्ठी'मत्त इत्यर्थः ४७ देवानांकार्य्यसिद्ध्यर्थमिति हे
राजन्!यदा सा देवानांकार्य्यसिद्ध्यर्थं आविर्भवति तथालोकेजनैः नित्याअपि सा उत्पन्ना इति अभिधीयते इत्यन्वयःसा

च ॥ नित्यैवसाजगन्मूर्त्तिस्तयासर्व्वमिदंततम् ४७ तथापितत्समुत्पत्तिर्बहुधाश्रूयतांमम ॥ देवा
नांकार्य्यसिद्ध्यर्थमाविर्भवतिसायदा ४८ उत्पन्नेतितदालोकेसानित्याप्यभिधीयते॥ योगनिद्रांय

महामाया आविर्भवति प्रकटीभवति सा महामाया अभिधीयते कथ्यते ४८ कथं देवप्रार्थनया तत्कार्य्यसिद्ध्यर्थमवतार
इति जिज्ञासां निर्वर्त्तयितुं मोहकारस्यैव च राज्ञा पृष्टत्वेनाह मोहिकायास्तमोगुणप्रधानाया अवतारं वक्तुमितिहासमा
ह योगनिद्रामिति हे राजन्!यदा कल्पान्ते जगति एकार्णवीकृते सति भगवान् प्रभुःविष्णुःशेषं आस्तीर्य्य योगनिद्रां अभ
जत् कल्पान्ते ब्रह्मदिनान्ते एकार्णवीकृतेसति एकःअर्णवो यस्मिन् स एकार्णवःकृतः एकार्णवीकृतः तस्मिन् एकार्णवी
कृते अर्णवः समुद्रः एकार्णवःकृतः जातः भगवान् भगं विद्यते यस्यसः भगवान् भगं षडैश्वर्य्यं प्रभुः कर्तुं अकर्तुं अन्यथा 

कर्तुं समर्थः आस्तीर्य्यं शय्यांकृत्वा योगनिद्रां तमःप्रधानांशक्तिम् ४९ तदेति हे राजन् ! तदाविष्णुकर्णमलोद्भूतौमधुकैट
भौविख्यातौ घोरौद्वौ असुरौ ब्रह्माणं हन्तुंउद्यतौ विष्णुकर्णमलोद्भूतौ विष्णोः कर्णौविष्णुकर्णौ विष्णुकर्णयोर्म्मलं विष्णु
कर्णमलं तस्मादुद्भूतौ विष्णुकर्णमलोद्भूतौ कर्णौ श्रवणौ उद्यतौ उत्पन्नौ मधुकैटभौ मधुश्च कैटभश्च तौ मधुकैटभौ
मधुःमधुनामाकैटभःकैटभनामा विख्यातौ प्रसिद्धौ असुरौ भयंकरौ द्वौ असुरौ दैत्यौ हन्तुंप्रहन्तुं उद्यतौ तत्परौजातौ ५०
ब्रह्माणमित्यत आह सनाभीति हे राजन् ! विष्णोः नाभिकमले स्थितः प्रजापतिः सः ब्रह्मा उग्रौ तौ असुरौ दृष्ट्वा

दाविष्णुर्जगत्येकार्णवीकृते ४९ आस्तीर्य्यशेषमभजत्कल्पान्तेभगवान् प्रभुः ॥ तदाद्वावसुरौ
घोरौविख्यातौमधुकैटभौ ५० विष्णुकर्णमलोद्भूतौहन्तुम्ब्रह्माणमुद्यतौ ॥ सनाभिकमलेविष्णोः
स्थितोब्रह्माप्रजापतिः ५१ दृष्ट्वातावसुरौचोग्रौप्रसुप्तञ्चजनार्द्दनम् ॥ तुष्टावयोगनिद्रान्तामेकाग्र

जनार्द्दनं प्रसुप्तं एकाग्रहृदयस्थितःसन् हरेः विबोधनार्थाय हरिनेत्रकृतालयां तां योगनिद्रां तुष्टाव नाभिकमले नाभौक
मलं नाभिकमलं तस्मिन् नाभिकमले कमलं पद्मं प्रजानांपतिःप्रजापतिः प्रजानांजनानां लोकानांपतिः स्वामी उग्रौ
भयङ्करौ तौ असुरौ दैत्यौ जनार्द्दनः जनान् अर्द्दयति जनार्द्दनः तं जनार्द्दनं जनान् दुष्टजनान् अर्द्दयति मर्द्दयति जनार्द्दनं
विष्णुं प्रसुप्तं त्यक्तपालनव्यवहारं एकाग्रहृदयस्थितःसन् एकाग्रं हृदयं यस्यसः एकाग्रहृदयः एकाग्रं अनन्यविष्टं
हरेर्विष्णोः प्रबोधनार्थाय पालनव्यवहारप्रवृत्त्यर्थं हरिनेत्रकृतालयां हरेर्नेत्रे हरिनेत्रे हरिनेत्रयोः कृतःआलयो यया सा २०

 हरिनेत्रकृतालया तां हरिनेत्रकृतालयां हरेः विष्णोः आलयः स्थानं तां योगनिद्रां तमःप्रधानां शक्तिं तुष्टाव स्तुतिं चका 
 र ५.१।५२ योगनिद्रायां मूलशक्त्यभेदं मत्वा विशेषयति विश्वेश्वरीमिति कथंभूतः ब्रह्मा तेजसः प्रभुःप्रभुःसमर्थःकथं 
भूतां योगनिद्रां जगद्धात्रीम् जगतांधात्री जगद्धात्री ताम् जगद्धात्रीम् जगतां चतुर्दशलोकानां धात्री जननी माता पुनः कथंभूतां योगनिद्रां स्थितिसंहारकारिणीम् स्थितिश्च संहारश्च स्थितिसंहारौ स्थितिसंहारौ करोतीति स्थितिसंहार कारिणीम् ताम् स्थितिसंहारकारिणीम् पुनःकथंभूतां योगनिद्रां भगवतीम् भगं विद्यतेयस्याःसा भगवतीताम् भगवतीम्

हृदयस्थितः ५२ विबोनार्थायहरेर्हरिनेत्रकृतालयाम् ॥ विश्वेश्वरींजगद्धात्रींस्थितिसंहारकारि
णीम् ५३ निद्रांभगवतींविष्णोरतुलांतेजसःप्रभुः ॥ ब्रह्मोवाच ॥ त्वंस्वाहात्वंस्वधात्वंहिवषट्का

भगं षडैश्वर्यं पुनः कथंभूतां योगनिद्रां विष्णोः अतुलां निद्रां अतुलां महतीम् ५३ कथं तुष्टावेत्याह ब्रह्मोवाच ॥ त्वमितिहे अक्षरे,नित्ये ! त्वं स्वाहा असि हे अक्षरे, उपचयापचयहीने! हे नित्ये,जन्मनाशहीने! स्वाहा देवहविर्दानमन्त्रः आग्निपत्नी च देवहविर्दानमन्त्रः असि अग्निपत्नी असि त्वं स्वधा असि स्वधा पितृहविर्दानमन्त्रः पितृपत्नी च स्वधा पितृहविर्दानमंत्रः असि पितृपत्नी असि त्वं वषट्कारः असि त्वं वषट्क्रियते यत्र सः वषट्कार वषट्कारः यज्ञः असि यद्वा देवाह्वानमन्त्रश्च असि त्वं स्वरात्मिका असि स्वराः आत्मा यस्याः सा स्वरात्मिका स्वराः षोडश त्वं आत्मास्वरूपं त्वं 

दु० टी० स्वधा देवान्नं त्वं त्रिधामात्रात्मिकास्थिता असि त्रिधामात्राः आत्मा यस्याःसा त्रिधामात्रात्मिका त्रिधामात्रात्मिकाया अ०
२२ स्थिता त्रिधामात्रात्मिकास्थिता त्रिधा तिस्रो मात्राः ह्रस्वदीर्घप्लुताः आत्मा स्वरूपम् ५४ त्वं अर्द्धमात्रास्थिता असि १
अर्द्धाचासौ मात्रा च अर्द्धमात्रा तया स्थिता अर्द्धमात्रास्थिता अर्द्धमात्रया व्यञ्जनरूपया त्वं नित्या असि नित्या परिमाणादिरहिता या त्वं विशेषतः अनुच्चार्य्या असि विशेषतः मात्रात्रयवैलक्षण्येन अनुच्चार्य्या उच्चरितुं योग्या उच्चार्य्या न उच्चार्य्या अनुच्चार्य्या सा त्वं एव सावित्री असि सावित्री सवितुः प्रकाशिका सूर्य्यमण्डलस्थिता सूर्य्यप्रकाशि

रःस्वरात्मिका ५४ सुधात्वमक्षरेनित्येत्रिधामात्रात्मिकास्थिता ॥ अर्द्धमात्रास्थितानित्यायानुच्चार्य्याविशेषतः ५५ त्वमेवसात्वंसावित्रीत्वंदेविजननीपरा ॥ त्वयैवधार्य्यतेसर्व्वंत्वयैतत्सृज्यते जगत् ५६ त्वयैतत्पाल्यतेदेवित्वमत्स्यन्तेचसर्व्वदा ॥ विसृष्टौसृष्टिरूपात्वंस्थितिरूपाचपाल

का असि सूर्य्यमण्डलस्थिता असि हे देवि! त्वं पराजननी असि परा उत्कृष्टा जननी माता ५५ हे देवि! त्वया सर्वदा सर्व्वं एतत् जगत् धार्य्यते त्वया सर्व्वदा सर्व्वं एतत् जगत्सृज्यते त्वया सर्व्वदा सर्व्वं एतत् जगत् पाल्यते त्वं अन्ते सर्व्वदा सर्व्वं एतत् जगत् अत्सि सर्वदा सदा सर्व्वं समस्तं सृज्यते उत्पाद्यते सर्व्वदा सदा समस्तं सर्व्वं पाल्यते रक्ष्यते अन्ते प्रलये संहारे सर्व्वदा सदा सर्व्वं समस्तं अत्सि भक्षयसि अग्निरूपेण आत्मसात्करोषि ५६ सृष्ट्यादि क्रियारूपापित्वमेवेत्याह विसृष्टाविति जगन्मये! त्वं विसृष्टौ अस्य जगतः सृष्टिरूपा असि किंच त्वं पालने अस्य जगतः २२

दु० टी० स्थितिरूपा असि ५७ तथेति हे जगन्मये ! तथा त्वं अन्ते अस्य जगतः संहृतिरूपा असि हे जगन्मये ! जगन्मयते इति अ०
२३ जगन्मया तत्सम्बोधने महाविद्या महावाक्यलक्षणा महतीचासौ विद्या च महाविद्या महामाया हरेर्जगज्जननी शक्तिः १
महतीचासौ माया च महामाया महामेधा धारणावती बुद्धिः महतीचासौ मेधा च महामेधा महास्मृतिःअतीतानाग
तानेककल्पस्मरणरूपा महती चासौ स्मृतिश्च महास्मृतिः ५८ महामोहा भवती त्वं महान्मोहो यस्याः सकाशात्

ने ५७ तथासंहृतिरूपान्तेजगतोऽस्यजगन्मये॥ महाविद्यामहामायामहामेधामहास्मृतिः ५८म
हामोहाचभवतीमहादेवीमहासुरी ॥ प्रकृतिस्त्वञ्चसर्व्वस्यगुणत्रयविभाविनी ५९ कालरात्रिर्म्म
हारात्रिर्मोहरात्रिश्चदारुणा ॥ त्वंश्रीस्त्वमीश्वरीत्वंह्रीस्त्वंबुद्धिर्बोधलक्षणा ६० लज्जापुष्टिस्त

सा महामोहा महादेवी महादेवस्य भार्य्या महासुरी महासुरस्य महादेवस्य भार्य्या महासुरी सर्वस्यजगतः त्वं प्रकृतिः
कारणभूताकीदृशी गुणत्रयविभाविनी गुणत्रयं सत्त्वरजस्तमोरूपं विभावयितुं शीलं यस्याः सा गुणत्रयविभाविनी ५९
कालरात्रिः यमभगिनी प्रलयकाले महारात्रिः मोहरात्रिः महामोहकाले मोहरात्रिः अतएव दारुणाभयानका त्वं श्रीः
लक्ष्मीरूपा त्वमीश्वरी ऐश्वर्य्ययुक्ता त्वं ह्रीः मन्त्रविशेषरूपा त्वं बुद्धिः बुद्धिरूपा कीदृशी बोधलक्षणा बोधोनिर्णयात्मकं
ज्ञानं लक्षणंरूपंयस्याःसाबोधलक्षणा ६० तथा लज्जा लज्जारूपा पुष्टिः पोषणस्वरूपा तुष्टिः सन्तोषस्वरूपा त्वमेव २३

 शान्तिः विषयेभ्यः इन्द्रियोपरतिस्वरूपा क्षान्तिः सामर्थ्ये सत्यपि परापराधसहिष्णुत्वस्वरूपा खड्गिनी खड्गेनयुक्ता 
 खड्गोऽस्ति यस्याः सा खड्गिनी शूलिनी शूलमस्ति यस्याः सा शूलिनी घोरा एकहस्तस्थितशिरसा भयङ्करी गदिनी ग 
दा अस्ति यस्यास्सागदिनी तथा चक्रिणी चक्रमस्ति यस्याःसा चक्रिणी ६१ शङ्खिनी शङ्खोऽस्ति यस्याःसा शङ्खिनी चा
पिनी चापोऽस्ति यस्याःसा चापिनी बाणा बाणोऽस्ति यस्याःसा बाणा 'अर्शआदिभ्योऽचित्यच्' यदिबाणभुशुण्डीपरिघायु
धेतिपाठः बाणश्च भुशुण्डीच परिघश्च आयुधानि यस्याःसा बाणभुशुण्डीपरिघायुधा, सौम्या मनोज्ञा सौम्यतरा अतिश

थातुष्टिस्त्वंशान्तिःक्षान्तिरेवच ॥ खड्गिनीशूलिनीघोरागदिनीचक्रिणीतथा ६१ शङ्खिनीचापि
नीबाणाभुशुण्डीपरिघायुधा ॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ६२ परापराणांपर
मात्वमेवपरमेश्वरी ॥ यच्चकिञ्चित्क्वचिद्वस्तुसदसद्वाखिलात्मिके ६३ तस्यसर्वस्ययाशक्तिःसात्वं

येन सौम्या सौम्यतरा सौम्येभ्यस्त्वतिसुन्दरी सर्वसौम्येभ्यः अतिसुन्दरी त्वमसि अशेषसौम्येभ्यःअशेषाश्चते सौम्याश्च
अशेषसौम्यास्तेभ्यःअशेषसौम्येभ्यःअतिसुन्दरी अतिशयेन सुन्दरी अतिसुन्दरी ६२ परा त्वं परा असि परा श्रेष्ठा पराणां
परमा त्वमेवासि पराणां उत्कृष्टानां परमा प्रधाना त्वमेवासि 'परमास्यात्प्रधानायामितिधरणीकोशः' कुतइत्यत आह
परमेश्वरी यतस्त्वं परमेश्वरी असि परमाचासौईश्वरी च परमेश्वरी हे अखिलात्मिके ! यत्किंचिद्वस्तु सदसद्वा तच्च त्व
मेवासि अखिलंसर्वं आत्मास्वरूपं यस्याःसा अखिलात्मिका तत्सम्बोधने हे अखिलात्मिके ! वस्तु प्रमेयं सत् चेतनवर्गः २४

 असत् जडवर्गः ६३ तस्येति तस्य सर्व्वस्य या शक्तिः सामर्थ्यं सात्वमेवासि तदा किं स्तूयसे अपितु स्तुत्यैवास्मदादीनां 
 भवसि स्तोतृस्तुत्ये तच्छक्तिस्तुतीनां ततोन्यत्वाभावादभेदनिबन्धनास्तुतिः कथं स्यादितिभावः स्तुत्यत्वाभावमेव पुन 
राह ययेति यया त्वया जगत्स्रष्टा जगतः स्रष्टा जगत्स्रष्टा ब्रह्मरूपेण इत्याह कः जगत्पाता जगतः पाता विष्णुरूपेण
रक्षकः यः विष्णुः जगत् अत्ति रुद्ररूपेण संहरति ६४ सोपीति सः अपि यया त्वया निद्रावशं नीतः इह कः त्वांस्तोतुं
ईश्वरः भवति हे देवि ! त्वया यतः विष्णुः किंच ईशानः एवच शरीरग्रहणं कारिताः निद्रावशंनीतः निद्रायाः वशः नि

किंस्तूयसेतदा ॥ ययात्वयाजगत्स्रष्टाजगत्पातात्तियोजगत् ६४ सोऽपिनिद्रावशंनीतः कस्त्वांस्तो
तुमिहेश्वरः ॥ विष्णुःशरीरग्रहणमहमीशानएवच ६५ कारितास्तेयतोऽतस्त्वांकः स्तोतुंशक्ति
मान्भवेत् ॥ सात्वमित्थंप्रभावैःस्वैरुदारैर्देविसंस्तुता ६६ मोहयैतौदुराधर्षावसुरौमधुकैटभौ ॥

द्रावशः तं निद्रावशं नीतः प्रापितः इह अस्मिन् स्तुतिविषये स्तोतुं ईश्वरः समर्थः न कोपीत्यर्थः यतः यस्मात्
कारणात् अहं ब्रह्मा ईशानः शिवः ते सर्व्वे शरीरग्रहणं शरीरस्यग्रहणं शरीरग्रहणं तत् शरीरग्रहणं कारिताः ६५
अतः कस्त्वां स्तोतुं शक्तिमान् भवेत् हे देवि ! इत्थं उदारैः स्वैः प्रभावैः संस्तुता सात्वं एतौ दुराधर्षौ मधुकैटभौ मोहय
अतः अस्मात् कारणात् स्तोतुं कः शक्तिमान् समर्थः न कोपीत्यर्थः इत्थं एवंविधैः उदारैः असाधारणैः स्वैः स्वकीयैः
प्रभावैः माहात्म्यैः संस्तुतासती दुराधर्षौ मदोन्मत्तौ मधुकैटभौ असुरौ दैत्यौ ६६ हे देवि ! त्वयालघु जगत्स्वामी अच्युतः २५

प्रबोधं नीयतां किंच एतौ महासुरौ हन्तुं अस्यबोधः क्रियतां लघु शीघ्रं जगत्स्वामी जगतां स्वामी जगत्स्वामी जगतां
चतुर्दशलोकानां स्वामी ईश्वरः अच्युतः विष्णुः प्रबोधं जागरणं पालनोद्यमरूपं नीयतां प्रापय एतौ महासुरौ मधु
कैटभौ दैत्यौ हन्तुं प्रहर्तुं अस्य विष्णोःबोधः प्रवृत्तिः ६७ ॥ ऋषिरुवाच ॥ नेत्रास्येति हे राजन्! तदा तत्र वेधसा विष्णोः
प्रबोधनार्थाय मधुकैटभौ हन्तुं एवं स्तुता तामसी देवी नेत्रास्यनासिकाबाहुहृदयेभ्यः तथा उरसः निर्गम्य अव्यक्त

प्रबोधञ्चजगत्स्वामी नीयतामच्युतोलघु ६७ बोधश्चक्रियतामस्य हन्तुमेतौमहासुरौ ॥
ऋषिरुवाच ॥ एवंस्तुतातदादेवी तामसीतत्रवेधसा ६८ विष्णोःप्रबोधनार्थाय निहन्तुंमधुकैट
भौ ॥ नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ६९ निर्गम्यदर्शनेतस्थौब्रह्मणोऽव्यक्तजन्मनः ॥
उत्तस्थौचजगन्नाथस्तयामुक्तोजनार्द्दनः ७० एकार्णवेहिशयनात्ततःसददृशेचतौ ॥ मधुकैटभौदु

जन्मनः ब्रह्मणः दर्शने तस्थौ तत्र तस्मिन् समये वेधसा ब्रह्मणा प्रबोधनार्थाय जागरणार्थाय निहन्तुं प्रहर्तुं एवं पूर्वो
क्तप्रकारेण तामसी तमःप्रधाना शक्तिः नेत्रास्यनासिकाबाहुहृदयेभ्यः नेत्रे नयने आस्यं मुखं उरसः वक्षस्स्थलात् अ
व्यक्तजन्मनः अव्यक्तात् जन्म यस्य सः अव्यक्तजन्मा तस्य अव्यक्तजन्मनः अव्यक्तात् ईश्वरात् जन्म प्रादुर्भावः ६८
६९ उत्तस्थौ चेति हे राजन्! तया मुक्तः जगन्नाथःजनार्द्दनः एकार्णवे अहिशयनात् उत्तस्थौ ततः स तौ मधुकैटभौ द

दु०टी० दृशे किंच तौ मधुकैटभौ तं ददृशाते तया योगनिद्रया मुक्तः त्यक्तः जगन्नाथः जगतां नाथः जगन्नाथः जगतां चतुर्दश अ०
२७ लोकानां नाथः स्वामी जनार्द्दनः विष्णुः एकार्णवे एकश्चासौ अर्णवश्च एकार्णवः तस्मिन् एकार्णवे अर्णवः समुद्रः अहि १
शयनात् शेषशयनात् ततः तदनन्तरं सः जनार्द्दनः विष्णुः तौ मधुकैटभौ तं जनार्द्दनम् ७० तौ विशेषयति मधिवति क
थंभूतौ मधुकैटभौ दुरात्मानौ पुनः कथंभूतौ मधुकैटभौ अतिवीर्य्यपराक्रमौ पुनः कथंभूतौ मधुकैटभौ क्रोधरक्तेक्षणौ
पुनः कथंभूतौ मधुकैटभौ ब्रह्माणं अत्तुं जनितोद्यमौ दुष्टः आत्मा ययोः तौ दुरात्मानौ दुष्टः कुटिलः आत्मा अन्तः क

रात्मानावतिवीर्य्यपराक्रमौ ७१ क्रोधरक्तेक्षणावत्तुंब्रह्माणंजनितोद्यमौ ॥ समुत्थायततस्ता
भ्यांयुयुधेभगवान्हरिः ७२ पञ्चवर्षसहस्राणिबाहुप्रहरणोविभुः ॥ तावप्यतिबलोन्मत्तौमहा

रणं अतिवीर्य्यपराक्रमौ वीर्य्यश्च पराक्रमश्च तौ वीर्य्यपराक्रमौ अतिवीर्य्यपराक्रमौ ययोः तौ अतिवीर्य्यपराक्रमौ
वीर्य्यं उत्साहः पराक्रमः शक्त्यतिशयः अति अत्यन्तं क्रोधरक्तेक्षणौ क्रोधेन रक्ते ईक्षणे ययोः तौ क्रोधरक्तेक्षणौ ईक्ष
णे नेत्रे अत्तुं ग्रसितुं जनितोद्यमौ जनितः उद्यमो याभ्यां तौ जनितोद्यमौ जनितः कृतः उद्यमः उद्योगः ७१ समुत्था
येति कालाध्वनोर्द्वितीया हे राजन्! ततः समुत्थाय विभुः भगवान् हरिः बाहुप्रहरणः सन् पञ्चवर्षसहस्राणि ताभ्यां
सह युयुधे ततः तदनन्तरं परस्परावलोकानन्तरं विभुः व्यापकः बाहुप्रहरणः बाहवः एव प्रहरणो यस्यसःबाहुप्रहरणः
बाहवः एव भुजा पञ्चवर्षसहस्राणि पञ्चवर्षसहस्रपर्य्यन्तं ताभ्यां मधुकैटभाभ्याम् ७२ तावपीति अतिबलोन्म २७

त्तौ महामायाविमोहितौ तौ अपि केशवं इति उक्तवन्तौ इतीति किं हे केशव ! त्वया अस्मत्तः वरः व्रियताम् अतिब अ० १
लोन्मत्तौ अतिबलेन उन्मत्तौ अतिबलोन्मत्तौ अतिबलेन अत्यन्तबलेन उन्मत्तौ गर्व्वितौ महामायाविमोहितौ महा
मायया विमोहितौ महामायाविमोहितौ तौ मधुकैटभौ केशवं के शेते असौ केशवः तं केशवं के जले अस्मत्तः आवाभ्यां
वरः इष्टोर्थः व्रियतां गृह्यताम् ७३ ॥ भगवानुवाच ॥ भवेतामिति हे मधुकैटभौ ! भवन्तौ अद्य मे तुष्टौ भवतः तदा उभौ
अपि मम वध्यौ भवेताम् अत्र अन्येन वरेण किं मम एतावत् हि वृतम् अद्य यदा मे मह्यं तुष्टौ प्रसन्नौ उभौ द्वौ वध्यौ

मायाविमोहितौ ७३ उक्तवन्तौवरोऽस्मत्तोव्रियतामितिकेशवम् ॥ भगवानुवाच ॥ भवेतामद्य
मेतुष्टौममवध्यावुभावपि ७४ किमन्येनवरेणात्रएतावद्धिवृतंमम ॥ ऋषिरुवाच ॥ वञ्चिता
भ्यामितितदासर्व्वमापोमयंजगत् ७५ विलोक्यताभ्यांगदितोभगवान्कमलेक्षणः ॥ आवांज

हन्तुं योग्यौ वध्यौ हन्तुं प्रहर्तुं अत्र अस्मिन् वरदानविषये किंकिं प्रयोजनमस्ति मम यथा वृतं इष्टं ममेति कर्त्तुः शेषत्व
विवक्षायां षष्ठी ७४ ॥ ऋषिरुवाच ॥ वञ्चिताभ्यामिति हे राजन् ! तदा वञ्चिताभ्यां ताभ्यां सर्व्वं जगत् आपोमयं विलो
क्य कमलेक्षणः भगवान् गदितः इत्यन्वयः तदा तस्मिन् समये इति पूर्वोक्तप्रकारेण ताभ्यां मधुकैटभाभ्यां सर्व्वं सम
स्तं आपोमयं अद्भिः प्रचुरं आपोमयं अद्भिः जलैः प्रचुरं व्याप्तं विलोक्य दृष्ट्वा कमलेक्षणः कमलमिव ईक्षणे यस्यसः
कमलेक्षणः कमलमिव पद्ममिव ईक्षणे नेत्रे भगवान् भगं विद्यते यस्यसः भगवान् भगं षडैश्वर्य्यं भगवान् हरिः वि २८

दु०टी० ष्णुः जनार्द्दनः गदितः उक्तः ७५ किं गदितं तत्राह आवामिति हे केशव ! यत्र उर्व्वी सलिलेन परिप्लुता न भवति तत्र अ०
२६ त्वं आवां जहि हे केशव, के शेते असौ केशवः तत्सम्बोधने हे केशव ! उर्व्वी पृथिवी सलिलेन जलेन परिप्लुता व्याप्ता १
जहि प्रहर इत्यर्थः ७६ ऋषिरुवाच ॥ तथेति हे राजन् ! तथा इति उक्त्वा शङ्खचक्रगदाभृता भगवता तयोः शिरसी ज
घने कृत्वा चक्रेण वैछिन्ने इत्यन्वयः तथा तथास्तु शङ्खचक्रगदाभृता शङ्खश्च चक्रंच गदाच ताः शङ्खचक्रगदाः शङ्ख

हिनयत्रोर्व्वीसलिलेनपरिप्लुता ७६ ऋषिरुवाच ॥ तथेत्युक्त्वाभगवताशङ्खचक्रगदाभृता ॥ कृ
त्वाचक्रेणवैछिन्नेजघनेशिरसीतयोः ७७ एवमेषासमुत्पन्नाब्रह्मणासंस्तुतास्वयम् ॥ प्रभावमस्यादे
व्यास्तुभूयःशृणुवदामिते ७८ इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येमधुकैटभ
वधोनामप्रथमोऽध्यायः १॥ अस्यश्रीसप्तशतिकामध्यमचरित्रस्यविष्णुऋषिर्महालक्ष्मीर्देवताउ

चक्रगदाः बिभर्त्तीति शङ्खचक्रगदाभृत् तेन शङ्खचक्रगदाभृता बिभर्त्ति धारयति भगवता विष्णुना तयोः मधुकैटभ
योः शिरसी मस्तके वै इति निश्चयेन ७७ उपसंहरति एवमेषेति हे राजन् ! एवं ब्रह्मणा स्वयं संस्तुता एषा समुत्पन्ना
भवति त्वं यस्याः देव्याः तु प्रभावं भूयः शृणु अहन्ते वदामि एवंपूर्वोक्तप्रकारेण स्वयं स्वयमेव एषा देवी समुत्पन्ना
प्रादुर्भूता प्रभावं माहात्म्यं भूयः पुनः ते तुभ्यमित्यर्थः ७८ ॥ इति श्रीनागोजिभट्टसम्मतकृते सप्तशतीव्याख्याने
मधुकैटभवधोनाम प्रथमोऽध्यायः १ ॥ ॥ ॥ ॥ ॥ २६

भूयःशृण्वित्युक्तं तत्रेतिहासमाह ॥ ऋषिरुवाच ॥ ऋषिः सुरथं प्राह देवासुरमिति हे राजन्! पुरा महिषे असुराणां अधिपे सति किंच पुरन्दरे देवानां अधिपे सति पूर्णं अब्दशतं देवासुरंयुद्धं अभूत् इत्यन्वयः पुरा पूर्व्वं महिषे महिषासुरे अधिपे सति राज्ञि सति किंच पुरन्दरे इन्द्रे अधिपे सति राज्ञि सति अब्दशतं अब्दानांशतं अब्दशतं अब्दानां वर्षाणां अब्दशतं शतवर्षपर्य्यन्तं देवासुरं देवाश्च असुराश्च ते देवासुराः देवासुराः प्रहर्त्तारो यत्र तत् देवासुरं युद्धं संग्रामः १ तत्रेति हे राजन्! तत्र महावीर्य्यैः असुरैर्देवसैन्यं पराजितं किंच सकलान्देवान् जित्वा महिषासुरःइन्द्रः अभूत्



ष्णिक्छन्दःशाकम्भरीशक्तिःदुर्गाबीजंवायुस्तत्त्वंश्रीमहालक्ष्मीप्रीत्यर्थेमध्यमचरित्रजपेविनियोगः

ऋषिरुवाच ॥ देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा ॥ महिषेसुराणामधिपेदेवानाञ्चपुरन्दरे १

तत्रासुरैर्म्महावीर्य्यैर्देवसैन्यंपराजितम् ॥ जित्वाचसकलान्देवानिन्द्रोभून्महिषासुरः २ ततः परा

जितादेवाःपद्मयोनिंप्रजापतिम् ॥ पुरस्कृत्यगतास्तत्रयत्रेशगरुडध्वजौ ३ यथावृत्तन्तयोस्तद्वन्

तत्र तस्मिन् युद्धे महावीर्य्यैः महत्वीर्य्यं येषान्ते महावीर्य्याः तैः महावीर्य्यैः वीर्य्यं पराक्रमः असुरैः दैत्यैः देवानां सैन्यं देवसैन्यं किंच सकलान् समस्तान् इन्द्रः सुरराट् २ हे राजन्! ततः पराजिताः देवाः प्रजापतिं पद्मयोनिं पुरस्कृत्य तत्रगताः तत्र कुत्र यत्र ईशगरुडध्वजौ तिष्ठतः ततः तदनन्तरं पलायनानन्तरं प्रजापतिं प्रजानांपतिः प्रजापतिः तंप्रजापतिं प्रजानां लोकानां जनानां पतिः स्वामी पद्मयोनिं पद्मं योनिर्यस्यसः पद्मयोनिः तं पद्मयोनिं पद्मं कमलं योनिः

दु० टी० उत्पत्तिस्थानं पद्मयोनिं ब्रह्माणं पुरस्कृत्य अग्रे कृत्य ईश गरुडध्वजौ ईशश्च गरुडध्वजश्च तौ ईशगरुडध्वजौ ईशः शिवः अ०
३१ गरुडध्वजः विष्णुरित्यर्थः ३ यथावृत्तमिति हे भगवन्तौ ! त्रिदशाः तयोः तद्वत् यथा वृत्तम् देवाभिभवः विस्तरं महिषा २
सुरचेष्टितं कथयामासुः त्रिदशाः तिस्रो दशा येषां ते त्रिदशाः तिस्रो दशाः अवस्थाः तयोः शिव विष्णवोः देवाभिभव
विस्तरं देवानां अभिभवः देवाभिभवः देवाभिभवस्य विस्तरो यस्मिन् तद्देवाभिभवविस्तरं देवानां इन्द्रादीनां अभि
भवः पराभवः विस्तरः विस्तारः महिषासुरचेष्टितं महिषासुरस्य चेष्टितं चेष्टितं कर्म्म ४ सूर्य्येन्द्रेति हे भगवन्तौ ! सः

महिषासुरचेष्टितम् ॥ त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ४ सूर्य्येन्द्राग्न्यनिलेन्दूनां यमस्य
वरुणस्यच ॥ अन्येषांचाधिकारान्सस्वयमेवाधितिष्ठति ५ स्वर्गान्निराकृतास्सर्व्वेतेनदेवगणा
भुवि ॥ विचरन्तियथामर्त्या महिषेणदुरात्मना ६ एतद्वःकथितंसर्व्वममरारि विचेष्टितम् ॥

स्वयं एव सूर्य्येन्द्राग्न्यानिलेन्दूनां किंच यमस्य किञ्च वरुणस्य किञ्च अन्येषां अधिकारान् अधितिष्ठति सः महिषासुरः सूर्य्येन्द्राग्न्यनिलेन्दूनां सूर्य्यश्च इन्द्रश्च अग्निश्च अनिलश्च इन्दुश्च ते सूर्य्येन्द्राग्न्यनिलेन्दवः तेषां सूर्य्येन्द्राग्न्य निलेन्दूनां अनिलः वायुः इन्दुः चन्द्रः अन्येषां देवानां अधिकारान् 'इत्यत्र सप्तम्यर्थे द्वितीया' ५ स्वर्गादिति हे भगवन्तौ ! दुरात्मना तेन महिषेण स्वर्गात् निराकृताः सर्वे देवगणाः भुवि विचरन्ति के इव मर्त्याः यथा 'यथा शब्दो इवार्थे' दुष्टः आत्मा यस्य सः दुरात्मा तेन दुरात्मना दुष्टः कुटिलः आत्मा अन्तःकरणं तेन महिषेण महिषासुरेण स्वर्गात् निराकृ ३१

भुवि पृथिव्याम् ६ एतद्द इति हे भगवन्तौ! अ०
दु० टी० ताः निस्सारिताः सर्वे समस्ताः देवगणाः देवानां इन्द्रादीनां गणाः समूहाः भुवि पृथिव्याम् ६ एतद्द इति हे भगवन्तौ! अ० २
३२ अस्माभिः सर्व्वं एतत् अमरारि विचेष्टितं वः कथितं वयं वः शरणं प्रपन्नाः स्मः युवाभ्यां तस्यवधः विचिन्त्यतामित्यर्थः २
सर्व्वं समस्तं अमरारिविचेष्टितं अमराणां अरिः अमरारिः अमरारेः विचेष्टितं अमरारिविचेष्टितं अमराणां देवानां
अरिः शत्रुः अमरारेः महिषासुरस्य विचेष्टितं कर्म वः युष्माकं प्रपन्नाः आगताः प्राप्ताः स्मः भवद्भ्यां युवाभ्या तस्य
महिषासुरस्य वधः प्रहारो विचिन्त्यतां विचार्य्यतामित्यर्थः ७ इत्थमिति हे राजन्! इत्थं देवानां वचांसि निशम्य

शरणंचप्रपन्नाःस्मो वधस्तस्यविचिन्त्यताम् ७ इत्थंनिशम्यदेवानां वचांसिमधुसूदनः ॥
चकारकोपंशम्भुश्च भ्रुकुटीकुटिलाननौ ८ ततोतिकोपपूर्णस्य चक्रिणोवदनात्ततः ॥ निश्चक्रा
ममहत्तेजो ब्रह्मणश्शङ्करस्यच ९ अन्येषांचैवदेवानां शक्रादीनांशरीरतः ॥ निर्ग्गतंसुमहत्ते

भ्रुकुटीकुटिलाननौ एकः मधुसूदनः किञ्च अपरः शम्भुः कोपं चकार इत्थं अनेन प्रकारेण देवानां इन्द्रादीनां
वचांसि वाक्यानि निशम्य श्रुत्वा भ्रुकुटीकुटिलाननौ भ्रुवोः कुटी भ्रुकुटी भ्रुकुट्या कुटिले आनने ययोः तौ भ्रुकुटी
कुटिलाननौ 'कुटी कौटिल्ये' कुटिले वक्रे आनने मुखे मधुसूदनः विष्णुः अपरः अन्यः शम्भुः शिवः कोपं क्रोधम् ८
तत इति हे राजन्! अतिकोपपूर्णस्य चक्रिणः ततः वदनात् किञ्च अतिकोपपूर्णस्य ब्रह्मणः ततः वदनात् किञ्च
अतिकोपपूर्णस्य शङ्करस्य ततः वदनात् महत्तेजः निश्चक्राम अतिकोपपूर्णस्य अतिकोपेन पूर्णः अतिकोपपूर्णः ३२

दु० टी० तस्य अतिकोपपूर्णस्य अतिकोपेन अतिक्रोधेन पूर्णः व्याप्तः चक्रिणः चक्रमस्यास्तीति चक्री तस्य चक्रिणः चक्रिणः अ०
३३ विष्णोः तस्मादिति ततः वदनात् मुखादित्यर्थः ९ अन्येषां चेति हे राजन् ! किंच कुपितानां अन्येषां देवानां किंच २
शक्रादीनां देवानां शरीरतः एव निर्गतं तत् सुमहत्तेजः ऐक्यं समगच्छत शक्रः आदिर्येषान्ते शक्रादयःतेषां शक्रादीनां
शक्रः इन्द्रः शरीरतः शरीरादिति शरीरतः 'पंचम्यास्तसिल्प्रत्ययः' ऐक्यं एकत्वं समगच्छत प्राप १० अतीवेति
हे राजन्! तत्र ते सुराः ज्वालाव्याप्तदिगन्तरं अतीवतेजसःकूटं ज्वलन्तं पर्व्वतं इव ददृशुः तत्र तस्मिन् काले सुराः

जस्तच्चैक्यंसमगच्छत १० अतीवतेजसःकूटं ज्वलन्तमिवपर्व्वतम् ॥ ददृशुस्तेसुरास्तत्र ज्वा
लाव्याप्तदिगन्तरम् ११ अतुलंतत्रतत्तेजःसर्व्वदेवशरीरजम् ॥ एकस्थंतदभून्नारीव्याप्तलोक
त्रयंत्विषा १२ यदभूच्छाम्भवन्तेजस्तेनाजायततन्मुखम्॥ याम्येनचाभवन्केशा बाहवोविष्णु

देवाः ज्वालाव्याप्तदिगन्तरं दिशां अन्तरं दिगन्तरं ज्वालयाव्याप्तंदिगन्तरं येन तज्ज्वालाव्याप्तदिगन्तरं अन्तरं मध्यं
अतीति अत्यन्तमेव कूटं समूहं ज्वलन्तं ज्वलतीति ज्वलन् तं ज्वलन्तमित्यर्थः ११ अतुलमिति हे राजन्! तत्र सर्व्व
देव शरीरजं अतुलं तत् तेजः एकस्थं सत् त्विषा व्याप्तलोकत्रयं तत् नारी अभूत् तत्र तस्मिन् काले सर्व्वदेवशरीरजं
सर्व्वेच ते देवाश्च सर्व्वदेवाः सर्व्वदेवानां शरीरं सर्व्वदेवशरीरं तस्मात् जातं सर्व्वदेवशरीरजं सर्व्वे समस्ताः अतुलं
महत् एकस्थं सत् एकाकारेणस्थितं सत्त्विषा कान्त्या व्याप्तलोकत्रयं लोकानां त्रयं लोकत्रयं व्याप्तं लोकत्रयं येन तत् ३३

व्याप्तलोकत्रयं लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः नारी स्त्री अभूत् १२ तेजोविभागेनाङ्गविभागमाह यदि
ति हे राजन् ! शाम्भवं यत्तेजः अभूत् तेन तेजसा तन्मुखं अजायत किंच याम्येन तेजसा केशाः अभवन् किंच विष्णुते
जसा बाहवः अभवन् शाम्भवं शम्भोः इदं शाम्भवं शम्भोः शिवस्य तन्मुखं तस्याः मुखं तन्मुखं तस्याः नार्य्याः यमस्य
इदं याम्यं तेन याम्येन विष्णुतेजसा विष्णोः तेजः विष्णुतेजः तेन विष्णुतेजसा बाहवः अष्टादशभुजाः १३ सौम्ये
नेति हे राजन् ! सौम्येन तेजसा स्तनयोः युग्मं अभवत् किंच ऐन्द्रेण तेजसा मध्यं अभवत् किंच वारुणेन तेजसा जङ्घोरु

तेजसा १३ सौम्येनस्तनयोर्युग्मं मध्यंचैन्द्रेणचाभवत् ॥ वारुणेनचजंघोरु नितम्बस्तेजसा
भुवः १४ ब्रह्मणस्तेजसापादौ तदंगुल्योर्कतेजसा ॥ वसूनांचकरांगुल्यः कौबेरेणचनासिका १५

अभवत् किंच भुवः तेजसा नितम्बः अभवत् सौम्येन सोमस्य इदं सौम्यन्तेन सौम्येन सोमस्य चन्द्रस्य युग्मं द्वन्द्वं
ऐन्द्रेण इन्द्रस्य इदं ऐन्द्रं तेन ऐन्द्रेण मध्यं उदरभागः वारुणेन वरुणस्य इदं वारुणं तेन वारुणेन जङ्घोरु जङ्घे च उरू च
प्राण्यङ्गत्वादेकवद्भावः जङ्घोरु भुवः पृथिव्याः नितम्बः कटिपश्चाद्भागः १४ ब्रह्मण इति हे राजन् ! ब्रह्मणः तेजसापादौ
अभवतां किंच अर्कतेजसा तदंगुल्यः अभवन् किंच वसूनां तेजसा करांगुल्यः अभवन् किंच कौबेरेण तेजसा नासिका
अभवत् पादौ चरणौ अर्कस्यतेजः अर्कतेजः तेन अर्कतेजसा अर्कस्य सूर्य्यस्य तदंगुल्यः तयोः अंगुल्यः तदंगुल्यः तयोः
पादयोः वसूनां अष्टवसूनां करांगुल्यः कराणां अंगुल्यः करांगुल्यः कराणां हस्तानां कौबेरेण कुबेरस्य इदं कौबेरं तेन

कौबेरेण तस्या इति हे राजन्! प्राजापत्येन तेजसा तस्याः दन्ताः तु सम्भूताः किंच तथा पावकतेजसा नयनत्रितयं जज्ञे प्राजापत्येन प्रजानां पतिः प्रजापतिः प्रजापतेः इदं प्राजापत्यं तेन प्राजापत्येन प्रजानां लोकानां जनानां पतिः स्वामी प्रजापतेः दक्षस्य तस्याः नार्य्याः सम्भूताः जाताः पावकतेजसा पावकस्यतेजः पावकतेजः तेन पावकतेजसा पावकस्य अग्नेः नयनात्रितयं नयनानां त्रितयं नयनत्रितयं नयनानां नेत्राणां जज्ञे जातम् १५।१६ भ्रुवौचेति हे राजन! किंच सन्ध्ययोःतेजःभ्रुवौ अभूतां किंच अनिलस्य तेजसा श्रवणौ अभूतां किंच अन्येषां देवानां तेजसां सम्भवः

तस्यास्तुदन्ताःसम्भूताः प्राजापत्येनतेजसा ॥ नयनत्रितयंजज्ञे तथापावकतेजसा १६ भ्रुवौ
चसन्ध्ययोस्तेजः श्रवणावनिलस्यच ॥ अन्येषांचैवदेवानां सम्भवस्तेजसांशिवा १७ ततः
समस्तदेवानां तेजोराशिसमुद्भवाम् ॥ तांविलोक्यमुदंप्रापुरमरामहिषार्द्दिताः १८ शूलंशूला

शिवा अभवत् अनिलस्य वायोः श्रवणौ कर्णौ सम्भवः एकीभावः शिवा देवी एवेति प्रसिद्धौ १७ तत इति हे राजन्! ततः महिषार्दिताः अमराः समस्तदेवानां तेजोराशिसमुद्भवान्तां विलोक्य मुदं प्रापुरित्यन्वयः ततः तदनन्तरं शिवा प्रादुर्भावानन्तरं महिषार्द्दिताः महिषेण अर्द्दिताः महिषार्द्दिताः महिषेण महिषासुरेण अर्द्दिताः पीडिताः अमराः देवाः समस्तदेवानां समस्ताश्च ते देवाश्च समस्तदेवाः तेषां समस्तदेवानां समस्ताः सम्पूर्णाः तेजोराशिसमुद्भवां तेजसां राशिस्तेजोराशिः सः समुद्भवो यस्याः सा तेजोराशिसमुद्भवा तां तेजोराशिसमुद्भवां राशिः समूहः समुद्भवः प्रादुर्भावः ३५

दु०टी० तां शिवांदेवीं विलोक्य दृष्ट्वा मुदंहर्षम् १८ शूलमिति हेराजन्! पिनाकधृक् शूलात् शूलं विनिष्कृष्य तस्यै ददौ किंच अ०
३६ कृष्णःस्वचक्रतःचक्रं समुत्पाद्य तस्यै दत्तवानित्यन्वयः पिनाकं धत्ते इति पिनाकधृक् पिनाकं धनुःधत्ते धार्य्यते पिनाकधृक् २
शिवः शूलात् त्रिशूलात् शूलं त्रिशूलं विनिष्कृष्य आकृष्य तस्यै देव्यै कृष्णो विष्णुःस्वचक्रतःस्वस्यचक्रं स्वचक्रंस्वचक्रा
दिति स्वचक्रतः स्वस्य आत्मनः समुत्पाद्य जनयित्वेत्यर्थः १९ शंखं चेति हे राजन्! किंच वरुणः शंखं तस्यै ददौ
हुताशनः शक्तिं ददौ मारुतः चापं तथा बाणपूर्णे इषुधी दत्तवान् तस्यै देव्यै हुताशनः अग्निः तस्यै देव्यै मारुतोवायुः

द्विनिष्कृष्य ददौतस्यैपिनाकधृक् ॥ चक्रंचदत्तवान्कृष्णः समुत्पाद्यस्वचक्रतः १९ शंखंचवरु
णः शक्तिं ददौतस्यैहुताशनः ॥ मारुतोदत्तवांश्चापं बाणपूर्णेतथेषुधी २० वज्रमिन्द्रःसमुत्पाद्य
कुलिशादमराधिपः ॥ ददौतस्यैसहस्राक्षो घण्टामैरावताद्गजात् २१ कालदण्डाद्यमोदण्डं

चापं धनुः बाणपूर्णे बाणैः पूर्णे बाणपूर्णे इषुधी इषवो धीयन्ते ययोः तौ इषुधी इषवः बाणाः धीयन्ते वर्द्धन्ते इषुधी निष
ङ्गौ २० वज्रमिति देयभेदादेकस्यैव दातुः पुनरुपादानेपिन दोषः हेराजन्! अमराधिपः इन्द्रः कुलिशात् वज्रं समुत्पाद्य
तस्यै ददौ किंच सहस्राक्षः ऐरावतात् गजात् घण्टां समुत्पाद्य तस्यै ददौ अमराधिपः नम्रियन्ते इतिअमराः अमराणां
अधिपः अमराधिपः अमराणां देवानां अधिपस्स्वामी कुलिशात् वज्रात् वज्रं समुत्पाद्य जनयित्वेत्यर्थः सहस्राक्षः
सहस्रं अक्षीणि यस्य सः सहस्राक्षः अक्षीणि नेत्राणि सहस्राक्षः इन्द्रः २१ कालेति हेराजन्! यमः कालदण्डात् ३६

दु०टी० दण्डं समुत्पाद्य तस्यै ददौ किंच अम्बुपतिः पाशं तस्यै ददौ किंच प्रजापतिः ब्रह्मा अक्षमालां किंच कमण्डलुं तस्यै अ०
३७ ददौ यमः कालः दण्डं कालदण्डं समुत्पाद्य जनयित्वेत्यर्थः अम्बुपतिः अम्बूनांपतिः अम्बुपतिः अम्बूनां जलानां पतिः २
स्वामी तस्यै देव्यै प्रजापतिः प्रजानांपतिः प्रजापतिः प्रजानां लोकानां जनानां पतिः स्वामी अक्षमालां अक्षैर्निर्मिता
माला अक्षमाला तां अक्षमालां अक्षैः रुद्राक्षैः निर्मिता रचिता तस्यै देव्यै २२ समस्तेति हे राजन्! दिवाकरःसमस्त
रोमकूपेषु निजरश्मीन् तस्यै ददौ किंच कालः खड्गं किंच निर्मलं चर्म्म तस्याः दत्तवान् दिवाकरः सूर्य्यः समस्त

पाशंचाम्बुपतिर्ददौ ॥ प्रजापतिश्चाक्षमालां ददौब्रह्माकमण्डलुम् २२ समस्तरोमकूपेषु निजर
श्मीन्दिवाकरः ॥ कालश्चदत्तवान्खड्गं तस्याश्चर्मचनिर्म्मलम् २३ क्षीरोदश्चामलंहारमज
रेचतथाम्बरे ॥ चूडामणिंतथादिव्यंकुण्डलेकटकानिच २४ अर्द्धचन्द्रंतथाशुभ्रंकेयूरान्सर्व्वबा

रोमकूपेषु रोम्णां कूपाः रोमकूपाः समस्ताश्च ते रोमकूपाश्च समस्तरोमकूपाः तेषु समस्तरोमकूपेषु समस्ताः स
म्पूर्णाः निजरश्मीन् निजाश्च ते रश्मयश्च निजरश्मयः तान् निजरश्मीन् निजाः स्वकीयाः रश्मयः किरणाः कालः नि
मेषाद्यभिमानी देवता निर्मलं स्वच्छं रत्नजटितं तस्याः देव्याः तस्या इति सम्बन्धत्वविवक्षायांषष्ठी २३ क्षीरोद
श्चेति अंगुलीयकरत्नदानानन्तरं क्षीरोदःकर्त्ता हेराजन्! क्षीरोदः तस्यैदेव्यै क्षीरोदःसमुद्रः अमलंशुभ्रंहारं मुक्ताहारंअजरे
नवीने अम्बरे वस्त्रे तथाच तथैव दिव्यं रमणीयं चूडामणिं शिरोभूषणं कुण्डले कर्णभूषणे कटकानि करभूषणानि कङ्क ३७

णानि २४ अर्द्धचन्द्रमिति तथा शुभ्रं अर्द्धचन्द्रं ददौ सर्व्वबाहुषु केयूरान् ददौ किंच विमलौ नूपुरौ ददौ तद्वत् अनुत्तमं ग्रैवेयकं ददौ शुभ्रं स्वच्छं निर्म्मलं अर्द्धचन्द्रं अर्द्धश्चासौ चन्द्रश्च अर्द्धचन्द्रस्तं अर्द्धचन्द्रं सर्व्वबाहुषु सर्व्वेच ते बाहवश्च सर्व्वबाहवः तेषु सर्व्वबाहुषु सर्व्वे सम्पूर्णा बाहवः अष्टादश भुजाः केयूरान् अङ्गानाम् बाहुभूषणानि विमलौ स्वच्छौ नूपुरौ पादभूषणौ नूपुरौ जात्याभिप्रायेण द्विवचनान्तम् तद्वत्तथैव अनुत्तमं श्रेष्ठं ग्रैवेयकं ग्रीवायां भवं ग्रैवेयकं ग्रीवाभूषणं २५ अंगुलीयकरत्नानीति किंच समस्तासु अंगुलीषु अंगुलीयकरत्नानि समस्तासु सम्पूर्णासु अंगुलीयक

हुषु ॥ नूपुरौविमलौतद्वद्ग्रैवेयकमनुत्तमम् २५ अंगुलीयकरत्नानिसमस्तास्वंगुलीषुच ॥ विश्वकर्म्माददौतस्यैपरशुञ्चातिनिर्म्मलम् २६ अस्त्राण्यनेकरूपाणितथाभेद्यंचदंशनम् ॥ अम्लानपङ्कजांमालांशिरस्युरसिचापराम् २७ अददज्जलधिस्तस्यैपङ्कजंचातिशोभनम् ॥ हिमवान्

रत्नानि अंगुलीषु भवानि अंगुलीयकानि अंगुलीयकानिच तानि रत्नानि च अंगुलीयकरत्नानि तानि अंगुलीयकरत्नानि कवचदानानन्तरं विश्वकर्मणः कर्तृत्वं हे राजन्! विश्वकर्म्मा तस्यै अतिनिर्म्मलं परशुं ददौ तस्यै देव्यै अति निर्म्मलं अतिस्वच्छं २६ अस्त्राणि तथा अनेकरूपाणि अस्त्राणि ददौ किंच अभेद्यं दंशनं ददौ अनेकं रूपं येषां तानि अनेकरूपाणि रूपं स्वरूपं अस्त्राणि पाशुपतास्त्रादीनि अभेद्यं भेदितुं योग्यं भेद्यं न भेद्यं अभेद्यं दंशनं कवचं अम्लाने त्यारभ्य पङ्कजदानानन्तरं जलधिः कर्त्ता हे राजन्! जलधिः तस्यै अम्लानपङ्कजांमालां शिरसि अददत् अपरां मालांउ

 रसि अददत् जलधिः समुद्रः तस्यै देव्यै अम्लानपङ्कजाम् नम्लानानि पङ्कजानि यस्यांसा अम्लानपङ्कजा ताम् अम्लान 
पङ्कजाम् पङ्कजानि कमलानि शिरसि मस्तके अपरां अन्यां मालां रत्नमयीं उरसि वक्षस्थले २७ अददिति किंच अ
तिशोभनम् पङ्कजं अददित्यन्वयः अतिशोभनं अतिमनोहरं पङ्कजं कमलमित्यर्थः पूर्व्वसम्बन्धः रत्नसिंहयोर्दाने
हिमवान् कर्त्ता हे राजन्! हिमवान् तस्यै सिंहवाहनं किंच विविधानि रत्नानि ददौ हिमवान् हिमाचलः तस्यै देव्यै वि
विधानि अनेकानि २८ ददाविति हे राजन्! धनाधिपः तस्यै सुरया अशून्यं पानपात्रं ददौ किंच सर्व्वनागेशः सः शेषः

वाहनंसिंहंरत्नानिविविधानिच २८ ददावशून्यंसुरयापानपात्रंधनाधिपः॥ शेषश्चसर्व्वनागेशो
महामणिविभूषितम् २९ नागहारंददौतस्यैधत्तेयःपृथिवीमिमाम्॥ अन्यैरपिसुरैर्देवीभूषणैरायुधै

महामणिविभूषितं नागहारं ददौ सः कः यः इमां पृथिवीं धत्ते सार्द्धश्लोकेनान्वयः धनाधिपः धनानां अधिपः धना
धिपः धनानां द्रव्याणां अधिपः स्वामी धनाधिपःकुबेरः तस्यै देव्यै सुरया मदिरया अशून्यं न शून्यं अशून्यं तत् अशून्यं
शून्यरहितं अशून्यं पूर्णं पानपात्रं पानस्यपात्रं पानपात्रं तत् पानपात्रं पानस्य मधुपानस्य सर्व्वनागेशः सर्व्वेच ते
नागाश्च सर्व्वनागाः सर्व्वनागानां ईशः सर्व्वनागेशः सर्व्वे सम्पूर्णाः नागाः सर्प्पाः ईशः स्वामी सः शेषः तस्यै दे
व्यै महान्तश्चते मणयश्च महामणयः महामणिभिर्विभूषितः तं महामणिविभूषितं महान्तः श्रेष्ठाः विभूषितः शोभाय
मानः नागहारः नागैर्निर्मितहारः तं नागहारं नागैः सर्पैः निर्मितः रचितः सः शेषः धत्ते धारयतीत्यर्थः २९ ३६

दु०टी० अन्यैरिति अन्यैः अपि सुरैः भूषणैः तथा आयुधैःसंमानिता देवी उच्चैः साट्टहासं यथास्यात्तथा मुहुर्मुहुः ननाद सुरैः अ०
४० देवैः भूषणैः आभरणैः आयुधैः शस्त्रास्त्रैः संमानिता सत्कृता उच्चैः उच्चस्वरेण साट्टहासं अट्टहासेन अत्यर्थहासेन व २
र्तमानं युक्तं मुहुर्मुहुः वारंवारामित्यर्थः ननाद शब्दं कृतवती सार्द्धश्लोकार्थः ३० तस्या इति हे राजन् ! तस्या घोरेण
नादेन कृत्स्नं नभः आपूरितं तस्याः देव्या घोरेण भयंकरेण नादेन शब्देन कृत्स्नं समस्तं नभः आकाशं आपूरितं व्या
प्तम् अर्द्धश्लोकार्थः ३१ अमायेति हे राजन् ! अमायता अतिमहता तेन महान् प्रतिशब्दः अभूत् किंच सकलाः लो

स्तथा ३० सम्मानितानननादोच्चैःसाट्टहासंमुहुर्मुहुः ॥ तस्यानादेनघोरेणकृत्स्नमापूरितंनभः ३१
अमायतातिमहताप्रतिशब्दोमहानभूत् ॥ चुक्षुभुस्सकलालोकास्समुद्राश्चचकम्पिरे ३२ चचाल
वसुधाचेलुःसकलाश्चमहीधराः ॥ जयेतिदेवाश्चमुदातामूचुःसिंहवाहिनीम् ३३ तुष्टुवुर्मुनयश्चैनां

काः चुक्षुभुः किंच समुद्राः चकम्पिरे अमायता मायतीति मायन् न मायन् अमायन् तेन अमायता अपरिमितेन तेन ना
देन प्रतिशब्दः प्रतिध्वनिः सकलाः सम्पूर्णाः लोकाः जनाः चुक्षुभुः क्षुभितवन्तः चकम्पिरे कम्पिताः बभूवुः ३२ चचाले
ति हे राजन् ! वसुधा चचाल किंच सकलाः महीधराः चेलुः किंच देवाः सिंहवाहिनीं तां मुदा जय इति ऊचुरित्यन्वयः
वसुधा पृथिवी चचाल चलिता बभूव सकलाः संपूर्णाः महीधराः धरन्तीति धराः मह्या धराः महीधराः धरन्ति धारयन्ति
मह्याःपृथिव्याः महीधराः पर्वताःचेलुः चलिताः बभूवुः देवाः इन्द्रादयः सिंहवाहिनीं सिंहं वाहयितुं शीलंयस्यास्सा सिं ४०

 हवाहिनी ताम् सिंहवाहिनीम् वाहयितुं प्राप्तुं शीलं स्वभावः तां देवीं मुदाहर्षेण प्रीत्या जय जयेतिऊचुः कथितवन्त इत्य 
 र्थः ३३ तुष्टुवुरिति हे राजन्! भक्तिनम्रात्ममूर्त्तयः मुनयः एनां तुष्टुवुः किंच अमरारयः समस्तं त्रैलोक्यं संक्षुब्धं दृष्ट्वा सं 
क्षुब्धाः भक्तिनम्रात्ममूर्त्तयः आत्माच मूर्त्तिश्च आत्ममूर्त्ती भक्त्यानम्रे आत्ममूर्त्ती येषां ते भक्तिनम्रात्ममूर्त्तयः आत्मा अ
न्तःकरणं मूर्त्तिः शरीरं नम्रेण नम्रीभूतेन एनां देवीं तुष्टुवुः स्तुतवन्तः अमरारयः अमराणां अरयः अमरारयः अमरा
णां देवानां अरयः शत्रवः अमरारयः दैत्याः समस्तं सम्पूर्णं त्रैलोक्यं त्रयोलोकास्त्रैलोक्यं संक्षुब्धं क्षुभितं व्याकुलं सं

नांभक्तिनम्रात्ममूर्त्तयः ॥ दृष्ट्वासमस्तंसंक्षुब्धंत्रैलोक्यममरारयः ३४ सन्नद्धाखिलसैन्यास्तेसमुत्त
स्थुरुदायुधाः ॥ आःकिमेतदितिक्रोधादाभाष्यमहिषासुरः ३५ अभ्यधावततंशब्दमशेषैरसुरै
र्वृतः ॥ सददर्शततोदेवींव्याप्तलोकत्रयांत्विषा ३६ पादाक्रान्त्यानतभुवंकिरीटोल्लिखिताम्बराम् ॥

क्षुब्धाः क्षुभिताः व्याकुलाः बभूवुः ३४ सन्नद्धेति हे राजन्! सन्नद्धाखिलसैन्याः ते उदायुधाः सन्तः समुत्तस्थुः आः ए
तत् किं इति क्रोधादाभाष्य महिषासुरः अशेषैः असुरैः वृतः सन् तंशब्दं अभ्यधावत ततः सः त्विषा व्याप्तलोकत्रयां तां
देवीं ददर्श अखिलानिच तानि सैन्यानि च अखिलसैन्यानि सन्नद्धानि अखिलसैन्यानि येषान्ते सन्नद्धाखिलसैन्याः
अखिलानि समस्तानि सन्नद्धानि धृतसन्नाहानि उदायुधाः सन्तः समुत्तस्थुः धावन्तः आः इति क्रोधाविष्करणे न
किमास्ति आभाष्य उक्त्वा अशेषैः सम्पूर्णैः असुरैःदैत्यैः वृतः सन् वेष्टितः सन् तं शब्दं अभिलक्षीकृत्य अभ्यधावत ततः ४१

दु०टी० तदनन्तरं धावनानन्तरं सः महिषासुरः त्विषा कान्त्या व्याप्तलोकत्रयां लोकानां त्रयं लोकत्रयं व्याप्तं लोकत्रयं यया अ०
४२ सा व्याप्तलोकत्रया तां व्याप्तलोकत्रयां लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः ३५ । ३६ देवीं विशेषयति २
सार्द्धपादेति कथंभूतां देवीं पादाक्रान्त्या नतभुवं पादाभ्यां आक्रान्तिः पादाक्रान्तिः पादाक्रान्त्या आनता भूः यया सा
पादाक्रान्त्यानतभूः ताम् पादाक्रान्त्यानतभुवम् पादाभ्यां चरणाभ्यां आक्रान्तिः आक्रमणं आनतानम्रीकृता भूः
पृथिवी पुनः कथंभूतां देवीं किरीटोल्लिखिताम्बराम् किरीटेनउल्लिखितंअम्बरं यया सा किरीटोल्लिखिताम्बरा तां किरीटो

क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेनताम् ३७ दिशोभुजसहस्रेण समन्ताद्व्याप्यसंस्थि
ताम् ॥ ततःप्रववृतेयुद्धं तयादेव्यासुरद्विषाम् ३८ शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगन्तरम् ॥

ल्लिखिताम्बराम् किरीटेन मुकुटेन उल्लिखितं स्पष्टं अम्बरं आकाशं पुनः कथंभूतां देवीं धनुर्ज्यानिःस्वनेन क्षोभिताशेषपा
तालां धनुषः ज्या धनुर्ज्या तस्याः निःस्वनः धनुर्ज्यानिःस्वनः तेन धनुर्ज्यानिःस्वनेन ज्या प्रत्यञ्चा निःस्वनः टङ्कार
शब्दः अशेषाणिच तानि पातालानिच अशेषपातालानि क्षोभितानि अशेषपातालानि यया ताम् ३७ दिश इति पुनः
कथंभूतां देवीं भुजसहस्रेण दिशः समन्ताद्व्याप्य संस्थिताम् भुजसहस्रेण भुजानां सहस्रं भुजसहस्रं तेन भुजसहस्रेण
समन्तात्सर्व्वतः हे राजन्! ततः बहुधा मुक्तैः शस्त्रास्त्रैः आदीपितदिगन्तरं सुरद्विषां तया देव्या सह युद्धं प्रववृते ततः
तदनन्तरं देवीदर्शनानन्तरं बहुधा अनेकप्रकारेण मुक्तैः क्षितैः शस्त्रास्त्रैः शस्त्राणिच अस्त्राणिच तानि शस्त्रास्त्राणि तैः ४२

दु०टी० शस्त्रास्त्रैः शस्त्राणि बाणाः अस्त्राणि पाशुपतास्त्रादीनि आदीपितदिगन्तरं दिशां अन्तरं दिगन्तरं आदीपितं दिगन्तरं अ०
४३ यस्मिन् तत् आदीपितदिगन्तरं अन्तरं मध्यं आदीपितं प्रकाशितं सुरद्विषां दैत्यानां प्रववृते प्रवृत्तं ३८महिषासुरसेनानीः २
महासुरः चिक्षुराख्यः किंच अन्यैःसहितःचामरः चतुरङ्गबलान्वितःसन् तया सह युयुधे महिषासुरस्यसेनानीः महासुरः
चत्वारि अङ्गानि यस्य तत् चतुरङ्गं चतुरङ्गंच तत् बलंच चतुरङ्गबलं चतुरङ्गबलेन अन्वितः चतुरङ्गबलान्वितः अङ्गानि

महिषासुरसेनानीश्चिक्षुराख्योमहासुरः ३९ युयुधेचामरश्चान्यैश्चतुरङ्गबलान्वितः ॥ रथाना
मयुतैःषड्भिरुदग्राख्योमहासुरः ४० अयुध्यतायुतानांच सहस्त्रेणमहाहनुः ॥ पञ्चाशद्भिश्च
नियुतैरसिलोमामहासुरः ४१ अयुतानांशतैःषड्भिर्वाष्कलोयुयुधेरणे ॥ गजवाजिसहस्त्रौघैरने
कैःपरिवारितः ४२ वृतोरथानांकोट्याच युद्धेतस्मिन्नयुध्यत ॥ विडालाख्योऽयुतानांच पञ्चाश

रथनागहयपदातयः बलं सैन्यं तया देव्या ३९।४० अयुध्यतेति हे राजन्! उदग्राख्योमहासुरः षड्भिः रथानां अयुतैः
तया सह अयुध्यत किंच महाहनुः अयुतानां रथानां सहस्त्रेणतया सह अयुध्यत उदग्राख्यः उदग्रनामा महासुरः सह
दैत्यस्तया देव्या महाहनुः महाहनुनामा दैत्यः ४१ किंच असिलोमा महासुरः पञ्चाशद्भिः रथानां नियुतैः षड्भिःअयु
तानां रथानां शतैः तया सह रणे युयुधे असिलोमा असिलोमनामा महासुरः महादैत्यः तया देव्या रणे संग्रामे 'एकं
दशशतंचैव सहस्त्रमयुतंतथा। लक्षंचनियुतंचैव कोटिरर्बुदमेवच ॥ वृन्दखर्वौनिखर्वश्च शङ्खपद्मौचसागरः। महापद्मं ४३

दु०टी० परार्द्धंच दशावृत्त्यायथाक्रममिति ब्रह्माण्डपुराणे' ४२ अनेकैः गजवाजिसहस्रौघैः परिवारितः किंच रथानां कोट्यावृतः अ०
४४ वाष्कलस्तया सह तस्मिन् युद्धे अयुध्यत अनेकैः असंख्यातैः गजवाजिसहस्रौघैः गजाश्च वाजिनश्च ते गजवाजिनः २
गजवाजिनां सहस्राणि गजवाजिसहस्राणि गजवाजिसहस्राणां ओघः गजवाजिसहस्रौघस्तैः गजवाजिसहस्रौघैःगजाः
हस्तिनः वाजिनः अश्वाः ओघाः समूहाः परिवारितः वेष्टितः वृतः वेष्टितः वाष्कलः वाष्कलनामादैत्यः तया देव्या ४३
अथ अयुतानां रथानां पञ्चाशद्भिः अयुतैः परिवारितः विडालाख्यः विडालनामा दैत्यः तया देव्या तत्र तस्मिन् संयुगे

द्भिरथायुतैः ४३ युयुधेसंयुगेतत्र रथानांपरिवारितः ॥ अन्येचतत्रायुतशोरथनागहयैर्वृताः ४४
युयुधुःसंयुगेदेव्या सहतत्रमहासुराः ॥ कोटिकोटिसहस्रैस्तुरथानांदन्तिनांतथा ४५ हयानांच
वृतोयुद्धेतत्राभून्महिषासुरः ॥ तोमरैर्भिन्दिपालैश्चशक्तिभिर्मुशलैस्तथा ४६ युयुधुःसंयुगेदे

तस्मिन् संग्रामे ४४ युयुधुरिति रथनागहयैः वृताः अयुतशः अन्ये महासुराः देव्या सह तत्र संयुगे युयुधः अस्य पूर्वे
णान्वयः रथाश्च नागाश्च हयाश्च ते रथनागहयास्तैः रथनागहयैः नागाः हस्तिनः हयाः अश्वाः वृताः संयुक्ताः तत्र
संयुगे तस्मिन् संग्रामे ४५ रथानां चेति उत्तरार्द्धमुत्तरावधि हे राजन् ! रथानां तथा दन्तिनां किंच हयानां कोटिकोटि
सहस्रैः वृतः महिषासुरः तत्र युद्धे अभूत् दन्तिनां हस्तिनां हयानां अश्वानां कोटिकोटिसहस्रैः कोटीनां कोटयःकोटि
कोटयः कोटिकोटीनां सहस्राणि कोटिकोटिसहस्राणि तैः कोटिकोटिसहस्रैः वृतः वेष्टितः रक्षितः अभूत् स्थितो बभू ४४

 व ४६ युयुधुरिति उत्तरार्द्धमुत्तरावधि हे राजन् ! केचित् दैत्याः तोमरैः भिन्दिपालैः किंच शक्तिभिः तथा मुशलैः खड्गैः 
 परशुपट्टिशैः देव्या सह तत्र संयुगे युयुधुः तोमरैः शस्त्रविशेषैः भिन्दिपालैः हस्तप्रमाणकाण्डैः शक्तिभिः सर्व्वजनप्र 
सिद्धिभिः परशुपट्टिशैः परशवश्च पट्टिशाश्च ते परशुपट्टिशास्तैः परशुपट्टिशैः परशुः कुठारः पट्टिशः खड्गविशेषः तत्र
संयुगे तस्मिन् संग्रामे केचित् दैत्याः शक्तीः चिक्षिपुः तथा केचित् पाशान् चिक्षिपुः ४७ देवीमिति हे राजन् ! अपरे ते ख
ड्गप्रहारैः तां देवीं हन्तुं प्रचक्रमुः अपरे अन्ये ते प्रसिद्धाः दैत्याः खड्गैःप्रहाराः खड्गप्रहाराः तैः खड्गप्रहारैःहन्तुं प्रहर्तुं

व्याखड्गैःपरशुपट्टिशैः ॥ केचिच्चचिक्षिपुःशक्तीः केचित्पाशांस्तथापरे ४७ देवींखड्गप्रहारैस्तु
तेतांहन्तुंप्रचक्रमुः ॥ सापिदेवीततस्तानिशस्त्राण्यस्त्राणिचण्डिका ४८ लीलयैवप्रचिच्छेदनि
जशस्त्रास्त्रवर्षिणी ॥ अनायस्ताननादेवीस्तूयमानासुरर्षिभिः ४९ मुमोचासुरदेहेषुशस्त्राण्यस्त्रा

प्रचक्रमुः उद्यमं कृतवन्तः ततः सा चण्डिकादेवी अपि तानि शस्त्राण्यस्त्राणि लीलया एव प्रचिच्छेद ततः तदनन्तरं श
स्त्रास्त्रवृष्ट्यनन्तरं शस्त्राणिच अस्त्राणिच तानि शस्त्रास्त्राणि लीलया क्रीडया एव ४८ उत्तरार्द्धमुत्तरान्वयि लीलयां
एवेति हे राजन् ! कथंभूता देवी निजशस्त्रास्त्रवर्षिणी शस्त्राणिच अस्त्राणिच तानि शस्त्रास्त्राणि निजानिच तानि शस्त्रा
स्त्राणिच निजशस्त्रास्त्राणि निजशस्त्रास्त्राणि वर्षितुं शीलं यस्याः सा निजशस्त्रास्त्रवर्षिणी निजानि स्वकीयानि शी
लं स्वभावः पुनः कथंभूता देवी अनायस्ताननना अनायस्तं आननं यस्याः सा अनायस्ताननना अनायस्तं प्रयासरहितं 

श्रमरहितं आननं मुखं पुनः कथंभूता देवी दीव्यति इति देवी पुनः कथंभूता देवी सुरर्षिभिः स्तूयमाना सुरर्षिभिः नार


दादिभिः स्तूयमाना स्तूयते इति स्तूयमाना ४६ मुमोचेति उत्तरार्द्धमुत्तरान्वयि हे राजन्! किंच ईश्वरी असुरदेहेषु शस्त्राण्यस्त्राणि मुमोच ईश्वरी देवी असुरदेहेषु असुराणांदेहाः असुरदेहाः तेषु असुरदेहेषु असुराणां दैत्यानां शस्त्राणि च अस्त्राणिच तानि शस्त्रास्त्राणि क्रुद्धः सः देव्याः वाहनकेशरी अपि धुतसटः सन् असुरसैन्येषु चचार क्रुद्धः जातक्रोधः वाहनकेशरी वाहनभूतश्चासौ केशरीच वाहनकेशरी केशरीसिंहः धुतसटः धुताः सटाः येनसः धुतसटः धुताः कम्पिताः

णिचेश्वरी ॥ सोपिक्रुद्धोधुतसटोदेव्यावाहनकेशरी ५० चचारासुरसैन्येषुवनेष्विवहुताशनः ॥ निश्श्वासान्मुमुचेयांश्चयुध्यमानारणेम्बिका ५१ तएवसद्यःसंभूतागणाःशतसहस्रशः ॥ युयुधुस्तेपरशुभिर्भिन्दिपालासिपट्टिशैः ५२ नाशयन्तोसुरगणान्देवीशक्त्युपबृंहिताः ॥ अवादयन्त

सटाः ग्रीवाकेशाः केषु कइव वनेषु हुताशनः इव हुताशनः दावानलः ५० चचारेति उत्तरार्द्धमुत्तरान्वयि हे राजन्! रणे युध्यमानाम्बिका यान् निश्श्वासान मुमुचेरणे संग्रामे युध्यमाना युध्यतेइति युध्यमाना अम्बिका देवी यान् यावन्तः ५१ तएवेति हे राजन्! ते एवसद्यःशतसहस्रशःगणाः संभूताः ते निश्श्वासाः सद्यःतत्क्षणंसंभूताः जाताः ते परशुभिः भिन्दिपालासिपट्टिशैः युयुधुः ते गणाः भिन्दिपालासिपट्टिशैः भिन्दिपालाश्च असयश्च पट्टिशाश्चते भिन्दिपालासिपट्टिशाः तैः भिन्दिपालासिपट्टिशैः असयः खड्गाः पट्टिशाः खड्गविशेषाः ५२ नाशयन्तइति हे राजन्! कथंभूताःते असुरगणान्ना

शयन्तः असुराणां गणाः असुरगणाः तान् असुरगणान् असुराणां दैत्यानांगणाः समूहाः नाशयन्तः नाशयन्तीति नाश
यन्तः पुनः कथंभूताः ते देवीशक्त्युपबृंहितादेव्याः शक्तिः देवीशक्तिः देवीशक्त्या उपबृंहिताः देवीशक्त्युपबृंहिताः शक्तिः
प्रभावः उपबृंहिताः आप्यायिताः वर्द्धिताः अस्मिन् युद्धमहोत्सवे केचित् गणाः पटहान् अवादयन्त युद्ध एव महोत्सवः
युद्धमहोत्सवः तस्मिन् युद्धमहोत्सवे पटहान् आनकान् अवादयन्त वादितवन्त इत्यर्थः तथा अपरे गणाः शङ्खान् अवाद
यन्त अपरे अन्ये अवादयन्त वादितवन्त इत्यर्थः ५३ मृदङ्गांश्चेति तथैव अन्येच मृदङ्गान् अवादयन्त हे राजन्! ततः

पटहान्गणाःशङ्खांस्तथापरे ५३ मृदङ्गांश्चतथैवान्येतस्मिन्युद्धमहोत्सवे ॥ ततोदेवीत्रिशू
लेनगदयाशक्तिवृष्टिभिः ५४ खड्गादिभिश्चशतशोनिजघानमहासुरान् ॥ पातयामासचैवा
न्यान्घण्टास्वनविमोहितान् ५५ असुरान्भुविपाशेनबद्ध्वाचान्यानकर्षयत् ॥ केचिद्द्विधाकृता

देवी त्रिशूलेन गदयाशक्तिवृष्टिभिः किंच खड्गादिभिः शतशः महासुरान् निजघान ततः तदनन्तरं युद्धमहोत्सवः प्राप्त्य
नन्तरं देवी अम्बिका शक्तिवृष्टिभिः शक्तीनां वृष्टयः शक्तिवृष्टयः ताभिः शक्तिवृष्टिभिः वृष्टयः वर्षाणि महासुरान् महादैत्या
न् किंच घण्टास्वनविमोहितान् अन्यान् एव असुरान् पातयामास घण्टायाः स्वनः घण्टास्वनः घण्टास्वनेन विमोहिताः
घण्टास्वनविमोहिताः तान्घण्टास्वनविमोहितान् स्वनः शब्दः विमोहिताः मूर्च्छिताः ५४।५५ असुरानिति किंच अन्यान्
असुरान् पाशेन बद्ध्वा भुवि अकर्षयत् भुवि पृथिव्यां तया देव्या केचित् दैत्याः तीक्ष्णैः खड्गपातैः द्विधाकृताः तीक्ष्णैः ४७

दु०टी० तीक्ष्णधारैः खड्गैः पाताः खड्गपाताः तै खड्गपातैः पाताः प्रहाराः पतनानि द्विधा द्विभागीकृताः ५६ विपोथिता अ०
४८ इति हे राजन्! अपरे गदया विपोथिताः सन्तः निपातेन भुवि शेरते अपरे अन्ये दैत्याः विपोथिताः आमर्दिताः ताडिताः २
निपातेन निपतनेन भुवि पृथिव्यां वर्त्तमानसामीप्येवर्त्तमानवद्वेत्यनेनसूत्रेणभूतेलट् केचित् दैत्याः मुशलेनभृशं
हताः सन्तः रुधिरं वेमुः भृशंअत्यन्तं हताः ताडिताः ५७ केचिदिति हे राजन्! केचित् दैत्याः शूलेन वक्षसि भिन्नाः

स्तीक्ष्णैःखड्गपातैस्तथापरे ५६ विपोथितानिपातेनगदयाभुविशेरते ॥ वेमुश्चकेचिद्रुधिरं
मुशलेनभृशंहताः ५७ केचिन्निपतिताभूमौभिन्नाःशूलेनवक्षसि ॥ निरन्तराःशरौघेणकृताः
केचिद्रणाजिरे ५८ सेनानुकारिणःप्राणान्मुमुचुस्त्रिदशार्दनाः ॥ केषांचिद्बाहवश्छिन्नाश्छिन्न
ग्रीवास्तथापरे ५९ शिरांसिपेतुरन्येषामन्येमध्येविदारिताः ॥ विच्छिन्नजङ्घास्त्वपरेपेतुरुर्व्यां

सन्तः भूमौ निपतिताः शूलेन त्रिशूलेन वक्षसि वक्षःस्थले भिन्नाः ताडिताः भूमौ पृथिव्यां निपतिताः निपेतुरित्यर्थः
केचित् दैत्याः रणाजिरे शरौघेण निरन्तराः कृताः रणाजिरे रणाङ्गणे शराणां ओघः शरौघः तेन शरौघेण शराणां बाणा
नां ओघः समूहः निरन्तराः अंगुलिमात्रावकाशरहिताः कृता इत्यर्थः ५८ सेनेति हे राजन्! त्रिदशार्दनाः सेनानुकारिणः
सन्तः प्राणान्मुमुचुः त्रिदशार्दनाः दैत्याः सेनानुकारिणः सेनाग्रिणः केषांचित् बाहवःछिन्नाः सन्तः प्राणान्मुमुचुः केषांचि
त् दैत्यानां तथा अपरे छिन्नग्रीवाः सन्तः प्राणान्मुमुचुः अपरे अन्ये दैत्याः छिन्नाः ग्रीवा येषांते छिन्नग्रीवाः५९शिरांसीति ४८

हे राजन्! अन्येषां छिन्नानि शिरांसि भूमौ पेतुः अन्येषां दैत्यानां शिरांसि मस्तकानि भूमौ पृथिव्यां अन्ये मध्ये विदारिताः अ०
सन्तः भूमौ पेतुः अन्येदैत्याः मध्ये शरीरमध्यभागे विदारिताः सन्तः ताडिताः सन्तः खण्डखण्डीकृताः सन्तः भूमौ पृ २
थिव्यां अपरे महासुरास्तु विच्छिन्नजङ्घाः सन्तः उर्व्यां पेतुः अपरे महासुराः दैत्याः विच्छिन्नाः जङ्घाः येषांते विच्छिन्नजङ्घाः
उर्व्यां पृथिव्याम् ६० एकेति हे राजन्! देव्या केचित् एकबाह्वक्षिचरणाः कृताः केचित् दैत्याः बाहूच अक्षिणीच चरणौच
प्राण्यङ्गत्वादेकवद्भावः बाह्वक्षिचरणं एकं बाह्वक्षिचरणं येषां ते एकबाह्वक्षिचरणाः अक्षिणीनेत्रे चरणौ पादौ देव्या केचित

महासुराः ६० एकबाह्वक्षिचरणाःकेचिद्देव्याद्विधाकृताः ॥ छिन्नेपिचान्येशिरसिपतिताःपुन
रुत्थिताः ६१ कबन्धायुयुधुर्देव्यागृहीतपरमायुधाः ॥ ननृतुश्चापरेतत्रयुद्धेतूर्यलयाश्रिताः ६२
कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ॥ तिष्ठतिष्ठेतिभाषन्तोदेवीमन्येमहासुराः ६३ पा

द्विधाकृताःकेचित् दैत्याःद्विधा द्विभागीकृताः किंच शिरसि छिन्ने अपिसति अन्ये पतिताः सन्तः पुनः उत्थिताः शिरसि मस्त
के अन्ये दैत्याः ६१ कबन्धा इति हे राजन्! कबन्धाः गृहीतपरमायुधाः सन्तः देव्यासह युयुधुः परमं च तत्आयुधंच प
रमायुधं गृहीतंपरमायुधं यैस्ते गृहीतपरमायुधाः परमं उत्कृष्टं आयुधं शस्त्रं अपरे छिन्नशिरसः कबन्धाः तूर्यलयाश्रिताः
सन्तः तत्रयुद्धे ननृतुः अपरे अन्ये छिन्नानि शिरांसि येषांते छिन्नशिरसः तूर्याणांलयः तूर्यलयः तूर्यलयेन आश्रिताः
तूर्यलयाश्रिताः तूर्याणां आनकानांलयः वाद्यं आश्रिताः स्थिताः ६२ हे राजन्! अन्ये महासुराः खड्गशक्त्यृष्टिपाणयः ४६

 

सन्तः देवीं तिष्ठ तिष्ठ इति भाषन्तः अन्ये महासुराः महादैत्याः खड्गश्च शक्तिश्च ऋष्टिश्च ताः खड्गशक्त्यृष्टयः खड्गशक्त्यृष्टयः पाणिषु येषां ते खड्गशक्त्यृष्टिपाणयः ऋष्टिः उभयतोधारः खड्गः पाणिषु हस्तेषु ६३ पातितैरिति हे राजन्! तत्र सा वसुन्धरा पातितैः रथनागाश्वैः किंच असुरैः अगम्या अभवत् तत्र कुत्र यत्र सः महारणः अभूत् वसुन्धरा पृथ्वी रथाश्च नागाश्च अश्वाश्च ते रथनागाश्वाः तैः रथनागाश्वैः नागाः हस्तिनः गन्तुं योग्या गम्या नगम्या अगम्या महांश्चासौ रणश्च महारणः रणः संग्रामः ६४ शोणितेति हे राजन्! तत्र सद्यः असुरसैन्यस्य मध्ये वारणासुरवाजिनां शोणितौघाः

तितैरथनागाश्वैरसुरैश्चवसुन्धरा ॥ अगम्यासाभवत्तत्रयत्राभूत्समहारणः ६४ शोणितौघाम
हानद्यःसद्यस्तत्रविसुस्रुवुः ॥ मध्येचासुरसैन्यस्यवारणासुरवाजिनाम् ६५ क्षणेनतन्महासैन्यमसु
राणांतथाम्बिका ॥ निन्येक्षयंयथावह्निस्तृणदारुमहाचयम् ६६ सचसिंहोमहानादमुत्सृजन्धुत

महानद्यः विसुस्रुवुः तत्र तस्मिन् संग्रामे सद्यः तत्क्षणं असुराणांसैन्यं असुरसैन्यं तस्य असुरसैन्यस्य असुराणां दैत्यानां वारणाश्च असुराश्च वाजिनश्च ते वारणासुरवाजिनः तेषां वारणासुरवाजिनां वारणाः हस्तिनः असुराः दैत्याः वाजिनः अश्वाः शोणितानां ओघो यासु ताः शोणितौघाः शोणितानां रुधिराणां ओघः प्रवाहः महत्यश्चताः नद्यश्च महानद्यः ६५ क्षणेनेति हे राजन्! तथा अम्बिका असुराणां तत् महासैन्यं क्षणेन क्षयंनिन्ये अम्बिका देवी असुराणां दैत्यानां महच्च तत् सैन्यंच महासैन्यं क्षणेन क्षणमात्रेण क्षयन्नाशं निन्ये प्रापितवती कं क इव तृणदारुमहाचयं वह्निः यथा ५०

तृणानिच दारूणिच तृणदारूणि तृणदारुणां महाचयः तृणदारुमहाचयः दारूणि काष्ठानि महाचयःसमूहः वह्निःअग्निः यथाइव ६६ सचेति किंचसः सिंहः महानादं उत्सृजन् सन् अमरारीणां शरीरेभ्यः असून् विचिन्वति इव महांश्चासौ नादश्च महानादः तं महानादं नादः शब्दः उत्सृजन् सन् कुर्व्वन् सन् अमराणां अरयः अमरारयः तेषां अमरारीणाम् अमराणां देवानां अरयः शत्रवः अमरारीणां दैत्यानां असून् प्राणान् कथंभूतः सिंहः धुतकेसरः धुताःकेसराः येन सः धुत केसरः धुताः कम्पिताः केसराः ग्रीवाकेशाः ६७ देव्येति हे राजन् ! तत्र देव्या किंच तैः गणैः असुरैः तथा युद्धं कृतं

केसरः ॥ शरीरेभ्योऽमरारीणामसूनिवविचिन्वति ६७ देव्यागणैश्चतैस्तत्रकृतंयुद्धंतथासुरैः ॥
यथैषांतुतुषुर्देवाः पुष्पवृष्टिमुचोदिवि ६८ इति मार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्ये
महिषासुरसैन्यवधोनामद्वितीयोऽध्यायः २ ॥ ❁ ❁ ॥

तथा यथा येषां देवाः दिवि पुष्पवृष्टिमुचः सन्तः तुतुषुः तत्र तस्मिन् संग्रामे देव्या इति कर्तुः असुरैर्दैत्यैः तथा येन प्रकारेण यथा येनप्रकारेण तेषां देवी गणासुराणां दिवि स्वर्गे पुष्पाणां वृष्टिः पुष्पवृष्टिः तां मुञ्चन्तीति पुष्पवृष्टि मुचः मुञ्चन्ति वर्षन्ति तुतुषुः सन्तुष्टाः बभूवुः प्रसन्नाः बभूवुः ६८ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्याने माहिषासुरसैन्यवधोनाम द्वितीयोऽध्यायः २ ॥ ❁ ❁ ॥

दु०टी० ऋषिरुवाच, निहन्यमानमिति हे राजन् ! अथ महासुरः सेनानीः चिक्षुरः तत्सैन्यं निहन्यमानं अवलोक्य कोपात् अ०
५२ अम्बिकां योद्धुं ययौ अथ अथेत्यनन्तरं सैन्यनाशानन्तरं महांश्चासौ असुरश्च महासुरः असुरः दैत्यः सेनां नयतीति ३
सेनानीः नयति प्राप्नोति सेनानीः सेनापतिः निहन्यते इति निहन्यमानं तत् निहन्यमानं अवलोक्य दृष्ट्वा कोपात्
क्रोधात् अम्बिकां देवीं ययौ आजगाम १ स इति हे राजन् ! सः असुरः देवीं शरवर्षेण ववर्ष कः केन कमिव तोयदःतोय
वर्षेण मेरुगिरेश्शृङ्गं यथा सः असुरः चिक्षुराख्यः दैत्यः शराणां वर्ष शरवर्ष तेन शरवर्षेण शराणां बाणानां वर्ष वृष्टिः

ऋषिरुवाच ॥ निहन्यमानंतत्सैन्यमवलोक्यमहासुरः ॥ सेनानीश्चिक्षुरःकोपाद्ययौयोद्धुम
थाम्बिकाम् १ सदेवींशरवर्षेणववर्षसमरेसुरः ॥ यथामेरुगिरेःशृङ्गंतोयवर्षेणतोयदः २ तस्य
च्छित्त्वाततोदेवीलीलयैवशरोत्करान् ॥ जघानतुरगान्बाणैर्यन्तारंचैववाजिनाम् ३ चिच्छेदच

तोयं ददातीति तोयदः तोयं जलं तोयदः मेघः तोयानां वर्षं तोयवर्षं तेन तोयवर्षेण तोयानां जलानां वर्ष वृष्टिः मेरु
श्चासौ गिरिश्च मेरुगिरिः तस्य मेरुगिरेः मेरुः सुमेरुः गिरिः पर्व्वतः शृङ्गं शिखरं यथा इव २ तस्येति हे राजन् ! ततः
देवी तस्य शरोत्करान् लीलया एव छित्त्वा तुरगान् किंच वाजिनां यन्तारं एव बाणैः जघान ततः तदनन्तरं बाणवृष्टय
नन्तरं तस्य चिक्षुरस्य शराणां उत्कराः शरोत्कराः तान् शरोत्करान् शराणां बाणानां उत्कराः समूहाः लीलया एव क्री
डया एव अनायासेन एव तुरगान् अश्वान् वाजिनां अश्वानां यन्तारं सारथिं ३ चिच्छेदेति हे राजन् ! आशुगैः सद्यः ५२

धनुः । किंच अतिसमुच्छ्रितं ध्वजं चिच्छेद किंच गात्रेषु छिन्नधन्वानं एव विव्याध आशुगच्छन्तीति आशुगाः तैः आशुगैः
आशु शीघ्रं आशुगैः बाणैः सद्यः तत्क्षणं अतिसमुच्छ्रितं अत्युन्नतं गात्रेषु हस्तपादादिषु छिन्नं धनुर्यस्य सः छिन्नधन्वा तं
छिन्नधन्वानं ४ सइति सः असुरः खड्गचर्मधरः सन् तां देवीं अभ्यधावत असुरः चिक्षुराख्यः दैत्यः धारयतीतिधरः
खड्गश्च चर्म्मच ते खड्गचर्म्मणी खड्गचर्म्मणोःधरः खड्गचर्म्मधरः धराति धारयति कथंभूतः असुरः छिन्नधन्वा छिन्नं
धनुर्यस्य सः छिन्नधन्वा पुनः कथंभूतः असुरः विगतःरथोयस्य सः विरथः विगतः नष्टः पुनः कथंभूतः असुरः हताः अश्वाः

धनुःसद्यो ध्वजंचातिसमुच्छ्रितम् ॥ विव्याधचैवगात्रेषुछिन्नधन्वानमाशुगैः ४ सच्छिन्नधन्वावि
रथोहताश्वोहतसारथिः ॥ अभ्यधावततांदेवींखड्गचर्मधरासुरः ५ सिंहमाहत्यखड्गेनतीक्ष्ण
धारेणमूर्द्धनि ॥ आजघानभुजेसव्येदेवीमप्यतिवेगवान् ६ तस्याःखड्गोभुजंप्राप्यपफालनृपन

यस्य सः हताश्वः पुनः कथंभूतः असुरः हतः सारथिर्यस्य सः हतसारथिः ५ सिंहमिति हे राजन्! अतिवेगवान् अपि
सः तीक्ष्णधारेण खड्गेन सिंहं मूर्द्धनि आहत्य देवीं सव्ये भुजे आजघान अतिवेगो विद्यते यस्य सः अतिवेगवान् सः
चिक्षुरासुरः तीक्ष्णः धारो यस्य सः तीक्ष्णधारः तेन तीक्ष्णधारेण मूर्द्धनि मस्तके आहत्य ताडयित्वा सव्ये वामे ६
तस्या इति हे नृपनन्दन! हे राजन्! खड्गः तस्याः भुजं प्राप्य पफाल ततः कोपात् अरुणलोचनः सः शूलं जग्राह नॄन्
पालयतीति नृपः नृपस्यनन्दनः नृपनन्दनः तत्सम्बोधने हे नृपनन्दन! नॄन् जनान् पालयति रक्षति नृपस्य राज्ञः नन्दनः

पुत्रः तस्याः देव्याः पफाल विशीर्णः ततः तदनन्तरं खड्गविशीर्णानन्तरं कोपात् क्रोधात् अरुणे लोचने यस्यसः अरुण
लोचनः अरुणे रक्ते लोचने नेत्रे सः चिक्षुरासुरः ७ चिक्षेपेति हे राजन् ! ततः महासुरः तु तत् भद्रकाल्यां चिक्षेप क
मिव तेजोभिः जाज्वल्यमानं अम्बरात् आगच्छन्तं रविबिम्बमिव ततः तदनन्तरं शूलग्रहणानन्तरं महासुरः चिक्षुरः तत्
शूलं चिक्षेप प्रक्षिप्तवान् जाज्वल्यते इति जाज्वल्यमानं जाज्वल्यते दीप्यते अम्बरात् आकाशात् रवेर्बिम्बंरविबिम्बंरवेः सू

न्दन ॥ ततोजग्राहशूलंसकोपादरुणलोचनः ७ चिक्षेपचततस्तत्तुभद्रकाल्यांमहासुरः ॥ जाज्व
ल्यमानंतेजोभीरविबिम्बमिवाम्बरात् ८ दृष्ट्वातदापतच्छूलंदेवीशूलममुञ्चत ॥ तच्छूलंशतधातेन
नीतंसचमहासुरः ९ हतेतस्मिन्महावीर्येमहिषस्यचमूपतौ ॥ आजगामगजारूढश्चामरस्त्रि
दशार्दनः १० सोपिशक्तिंमुमोचाथदेव्यास्तामम्बिकाद्रुतम् ॥ हुंकाराभिहतांभूमौपातयामासनि

र्यस्य बिम्बं मण्डलं ८ दृष्ट्वेति हे राजन् ! तदा देवी तत् शूलं आपतत् दृष्ट्वा शूलं अमुञ्चत तदा तस्मिन्काले आपतत् आ
गच्छत् शूलं त्रिशूलं महासुरः सः तत्शूलं तेन शतधानीतं स चिक्षुरः तेन शूलेन शतधा शतखण्डेन नीतं प्रापितम् ९
हतइति हे राजन ! महावीर्ये महिषस्यचमूपतौ तस्मिन् हतेसति त्रिदशार्दनः चामरः गजारूढःसन् आजगाम महत्वीर्यं
यस्य सः महावीर्यः तस्मिन् महावीर्ये वीर्यं पराक्रमः महिषस्य महिषासुरस्य चम्वाःपतिः चमूपतिः तस्मिन् चमूपतौ
चम्वाः सेनायाः पतिःस्वामी तस्मिन् चिक्षुरासुरे त्रिदशान्अर्दयतीति त्रिदशार्दनः त्रिदशान् देवान् अर्दयति मर्दयति पी

दु०टी० इयति चामरः चामरासुरः गजेआरूढः गजारूढः गजे हस्तिनि आरूढः स्थितः आजगाम आगच्छत् १० सोपीति हे राजन्! सः अ०
५५ अपि देव्याः शक्तिं मुमोच अथ अम्बिका द्रुतं तां भूमौ पातयामास कथंभूतां तां हुंकाराभिहतां पुनः कथंभूतां तां निष्प्रभां सः ३
चामरासुरः अथ अथेत्यनन्तरं शक्तिप्रक्षेपणानन्तरं अम्बिका देवी द्रुतं शीघ्रं तां शक्तिं भूमौ पृथिव्यां हुंकारेण अभिहता हुंकारा
भिहता तां हुंकाराभिहताम् अभिहता ताडिता निष्प्रभां निर्गता प्रभा यस्याः सा निष्प्रभा तां निष्प्रभाम् प्रभा कान्तिः ११
भग्नामिति हे राजन्! निपतितां शक्तिं भग्नां दृष्ट्वा क्रोधसमन्वितः चामरः शूलं चिक्षेप सा अपि तत् बाणैः अच्छिनत् भग्नां

ष्प्रभाम् ११ भग्नांशक्तिंनिपतितांदृष्ट्वाक्रोधसमन्वितः ॥ चिक्षेपचामरः शूलंबाणैस्तदपिसाच्छिन
त् १२ ततः सिंहः समुत्पत्यगजकुम्भान्तरस्थितः ॥ बाहुयुद्धेनयुयुधेतेनोच्चैस्त्रिदशारिणा १३ यु
ध्यमानौततस्तौतु तस्मान्नागान्महींगतौ ॥ युयुधातेतिसंरब्धौप्रहारैरतिदारुणैः १४ ततोवेगात्

त्रुटितां क्रोधेन समन्वितः क्रोधसमन्वितः समन्वितः युक्तः चामरः चामरासुरः सा देवी तत् शूलम् १२ तत इति हे राजन्!
ततः सिंहः समुत्पत्य गजकुम्भान्तरस्थितः सन् त्रिदशारिणा तेन सह उच्चैः बाहुयुद्धेन युयुधे ततः तदनन्तरं शूलच्छेद
नानन्तरं समुत्पत्य आप्लुत्य गजस्यकुम्भौ गजकुम्भौ गजकुम्भयोः अन्तरं गजकुम्भान्तरं गजकुम्भान्तरेस्थितः गजकुम्भा
न्तरस्थितः गजस्य हस्तिनः कुम्भौ गण्डस्थलौ अन्तरं मध्यं त्रिदशानां अरिः त्रिदशारिस्तेन त्रिदशारिणा त्रिदशानां
देवानां अरिः शत्रुः तेन चामरासुरेण उच्चैः महता बाहुभ्यां युद्धं बाहुयुद्धं तेन बाहुयुद्धेन १३ युध्यमानाविति हे राजन्! ५५

ततः युध्यमानौ तौ तु तस्मात् नागात् महींगतौ सन्तौ अतिदारुणैः प्रहारैः युयुधाते कथंभूतौ तौ अतिसंरब्धौ ततः तद नन्तरं बाहुयुद्धानन्तरं युध्येते इति युध्यमानौ तौ सिंहचामरासुरौ नागात् गजात् महीं पृथिवीं गतौ सन्तौ प्राप्तौ सन्तौ अतिसंरब्धौ अतिक्रोधाविष्टौ १४ तत इति हे राजन्! ततः मृगारिणा वेगात् खं उत्पत्य किंच निपत्य करप्रहारेण चामरस्य शिरःपृथक्कृतं ततःतदनन्तरं युद्धानन्तरं मृगाणांअरिःमृगारिःतेन मृगारिणा मृगाणां हरिणानां अरिःशत्रुःमृगारिणा सिंहेन खं आकाशं उत्पत्य गत्वा निपत्य अवतीर्य करेणप्रहारःकरप्रहारःतेन करप्रहारेण करेण हस्तेन चामरस्य चाम

खमुत्पत्यनिपत्यचमृगारिणा ॥ करप्रहारेणशिरश्चामरस्यपृथक्कृतम् १५ उदग्रश्चरणेदेव्या शिलावृक्षादिभिर्हतः ॥ दन्तमुष्टितलैश्चैवकरालश्चनिपातितः १६ देवीक्रुद्धागदापातैश्चूर्णयामासचोद्धतम् ॥ बाष्कलंभिन्दिपालेनबाणैस्ताम्रंतथान्धकम् १७ उग्रास्यमुग्रवीर्य्यंच तथैवच

रासुरस्य शिरः मस्तकं पृथक् भिन्नम् १५ उदग्रश्चेति हे राजन्! देव्या रणे उदग्रः शिलावृक्षादिभिः हतः किंच करालः एव दन्तमुष्टितलैः निपातितः रणे संग्रामे उदग्रः उदग्रासुरः शिला च वृक्षश्चतौ शिलावृक्षौ शिलावृक्षौ आदी येषां ते शिलावृक्षादयःतैःशिलावृक्षादिभिः शिला पाषाणः हतःप्रहारितःकरालःएव करालासुरः दन्ताश्च मुष्टयश्च तलाश्च ते दन्तमुष्टितलाः तैः दन्तमुष्टितलैः दन्ताः गजदन्तनिर्म्मितायुधानि तलाः चपेटाः निपातितः प्रहारितः १६ देवीति हे राजन्! देवी क्रुद्धा सती उद्धतं गदापातैः चूर्णयामास किंच बाष्कलं भिन्दिपालेन चूर्णयामास ताम्रं तथा अन्धकं बाणैः चूर्ण ५६

यामास उद्धतं उद्धतासुरं गदाभिः पाताः गदापाताः तैः गदापातैः पाताः प्रहाराः वाष्कलं वाष्कलासुरं ताम्रं ताम्रासुरं
अन्धकं अन्धकासुरं हतः प्रहारितः १७ उग्रास्यमिति हे राजन् ! त्रिनेत्रा परमेश्वरी उग्रास्यं किंच उग्रवीर्य्यं तथैवच
महाहनुं त्रिशूलेन जघान त्रीणि नेत्राणि यस्याः सा त्रिनेत्रा परा मा येषां ते परमाः परमाणां ईश्वरी परमेश्वरी पराउ
त्कृष्टा मा लक्ष्मीः परमाणां ब्रह्मादीनां ईश्वरी नियन्त्री उग्रं आस्यं यस्य सः उग्रास्यः तं उग्रास्यं उग्रं भयंकरं आस्यं
मुखं उग्रनामानं दैत्यं उग्रवीर्य्यं यस्य सः उग्रवीर्य्यः तं उग्रवीर्य्यं उग्रं महत् वीर्य्यं पराक्रमः उग्रवीर्य्यं उग्रवीर्य्यंना

महाहनुम् ॥ त्रिनेत्राचत्रिशूलेन जघानपरमेश्वरी १८ विडालस्यासिनाकायात्पातयामासवैशि
रः ॥ दुर्द्धरंदुर्मुखंचोभौशरैर्निन्येयमक्षयम् १९ एवंसंक्षीयमाणेतुस्वसैन्येमहिषासुरः ॥ माहिषे
णस्वरूपेणत्रासयामासतान्गणान् २० कांश्चित्तुण्डप्रहारेणखुरक्षेपैस्तथापरान् ॥ लांगूलता

मानं दैत्यं महद्धनुर्यस्य सः महाहनुः तं महाहनुं महाहनुनामानं दैत्यम् १८ विडालस्येति हे राजन् ! विडालस्य काया
त् शिरः असिना पातयामास वै दुर्द्धरं किंच दुर्मुखं उभौ शरैः यमक्षयं निन्ये विडालस्य विडालासुरस्य कायात् शिरः
मस्तकं असिना खड्गेन वै इतिनिश्चयेन दुर्द्धरं दुर्द्धरासुरं दुर्मुखं दुर्मुखासुरं उभौ द्वौ शरैः बाणैः यमक्षयं यमगृहं निन्ये
प्रापितवती १९ एवमिति हे राजन् ! एवं स्वसैन्ये संक्षीयमाणे सति महिषासुरः तु माहिषेण स्वरूपेण तान् गणान् त्रा
सयामास एवं अनेन प्रकारेण स्वस्य सैन्यं स्वसैन्यं तस्मिन् स्वसैन्ये महिषस्य इदं माहिषं तेन माहिषेण स्वरूपेण

आकारेण तान् निश्श्वाससम्भवान् २०कांश्चिदिति हे राजन् ! महिषासुरः कांश्चित् तुण्डप्रहारेण भूतले पातयामास त
था अपरान् खुरक्षेपैः भूतले पातयामास किंच लांगूलताडितान् कांश्चित् भूतले पातयामास किंच शृङ्गाभ्यां विदारि
तान् अन्यान् भूतले पातयामास कांश्चित् वेगेन भूतले पातयामास अपरान् नादेन किंच भ्रमणेन भूतले पातयामास
अन्यान् निश्श्वासपवनेन भूतले पातयामास कांश्चित् गणान् तुण्डेन प्रहारः तुण्डप्रहारः तेन तुण्डप्रहारेण तुण्डेन
मुखेन अपरान् अन्यान् गणान् खुरैः क्षेपाः खुरक्षेपाः तैः खुरक्षेपैः क्षेपाः क्षेपणानि लांगूलेन ताडिताः लांगूलताडिताः

डितांश्चान्याञ्च्छृङ्गाभ्यांचविदारितान् २१ वेगेनकांश्चिदपरान्नादेनभ्रमणेनच ॥ निश्श्वासप
वनेनान्यान्पातयामासभूतले २२ निपात्यप्रमथानीकमभ्यधावतसोऽसुरः ॥ सिंहंहन्तुंमहादे
व्याःकोपंचक्रेततोम्बिका २३ सोपिकोपान्महावीर्य्यःखुरक्षुण्णमहीतलः ॥ शृङ्गाभ्यांपर्व्वतानुच्चां

तान् लांगूलताडितान् ताडिताःप्रहारिताः कांश्चित् गणान् विदारितान् प्रहारितान् अन्यान् गणान् कांश्चित् गणान् अ
परान् अन्यान् गणान् नादेन शब्देन भ्रमणेन मण्डलाकारगमनेन अन्यान् गणान् निश्श्वासस्य पवनः निश्श्वासपवनः
तेन निश्श्वासपवनेन पवनः वायुः भूतले पृथिवीतले २१ । २२ निपात्येति हे राजन् ! सः असुरः प्रमथानीकं निपा
त्य महादेव्याः सिंहं हन्तुं अभ्यधावत ततः अम्बिका कोपं चक्रे असुरः महिषासुरः प्रमथानां अनीकं प्रमथानीकं तत् प्र
मथानीकं प्रमथानां गणानां अनीकं सैन्यं निपात्य प्रहृत्य महतीचासौ देवी च महादेवी तस्याः महादेव्याः महती उत्कृ

ष्टा हन्तुं प्रहर्तुं ततः तदनन्तरं अभ्यधावनानन्तरं अम्बिका देवी कोपं क्रोधं चक्रे कृतवती २३ सोपीति हे राजन्! महावीर्य्यः अपि सः कोपात् खुरक्षुण्णमहीतलः सन् उच्चान् पर्व्वतान् शृङ्गाभ्यां चिक्षेप किंच ननाद महत्वीर्य्यं यस्य सः महावीर्य्यः वीर्य्यं पराक्रमः सः महिषासुरः कोपात् क्रोधात् मह्याःतलं महीतलं खुरैःक्षुण्णं महीतलं येन सःखुरक्षुण्ण महीतलः मह्याः पृथिव्याः तलं तलभागं क्षुण्णं विदारितं ननाद शब्दं कृतवान् २४ वेगेति हे राजन्! तस्य वेगभ्रमण विक्षुण्णा मही व्यशीर्य्यत लांगूलेन आहतः अब्धिःजलेन सर्व्वतः प्लावयामास तस्य महिषासुरस्य वेगेन युक्तं वेगयुक्तं



शिचक्षेपचननादच २४ वेगभ्रमणविक्षुण्णामहीतस्यव्यशीर्यत॥ लांगूलेनाहतश्चाब्धिःप्लावया
माससर्व्वतः २५ धुतशृंगविभिन्नाश्चखंडखंडंययुर्घनाः ॥ श्वासानिलास्ताःशतशोनिपेतुर्नभसो
चलाः २६ इतिक्रोधसमाध्मातमापतंतंमहासुरम् ॥ दृष्ट्वासाचण्डिकाकोपंतद्वधायतदाकरोत् २७

वेगयुक्तं च तत् भ्रमणं च वेगभ्रमणं वेगभ्रमणेन विक्षुण्णा वेगभ्रमणविक्षुण्णा विक्षुण्णा कुण्ठिता शिथिला मही पृथ्वी आहतः ताडितः अब्धिः समुद्रः सर्व्वतः सर्व्वं जगत् २५ धुतेति हे राजन्! घनाः धुतशृङ्गविभिन्नाः सन्तः खण्डखण्डं यथास्यात्तथा ययुः किंच शतशः अचलाः श्वासानिलास्ताः सन्तः पुनः नभसः निपेतुः घनाः मेघाः धुते च ते शृङ्गे च धुतशृङ्गे धुतशृङ्गाभ्यां विभिन्नाः धुतशृङ्गविभिन्नाः धुते कम्पिते विभिन्नाः पृथक्भूताः खण्डस्य खण्डाः यस्यां क्रियायां तत् खण्डखण्डं ययुः प्रापुः अचलाः पर्व्वताः श्वासस्य अनिलाः श्वासानिलाः श्वासानिलैः अस्ताः श्वासानिलास्ताः

अनिलः वायुः अस्ताः आकाशं प्रतिगताः नभसः आकाशात् २६ इतीति हे राजन् ! इति क्रोधसमाध्मातं आपतन्तं म
हासुरं दृष्ट्वा सा चण्डिका तदा तद्वधाय कोपं अकरोत् इति अनेन प्रकारेण क्रोधेन समाध्मातः क्रोधसमाध्मातः तं
क्रोधसमाध्मातं समाध्मातः उद्दीपितः आपततीति आपतन् तं आपतन्तं आपतति आगच्छति महाबले 'महिषासुरं
सा चण्डिका तदा तस्मिन् काले तस्य वधः तद्वधस्तस्मै तद्वधाय तस्य महिषासुरस्य कोपं क्रोधम् २७ सेति हे राजन् !
सा तस्य उपरि पाशं क्षिप्त्वा तं महासुरं बबन्ध किंच बद्धोपिसःमहामृधे माहिषंरूपं तत्याज तस्य महिषासुरस्य महासु

साक्षिप्त्वातस्यवैपाशंतंबबन्धमहासुरम् ॥ तत्याजमाहिषंरूपंसोपिबद्धोमहामृधे २८ ततः
सिंहोभवत्सद्योयावत्तस्याम्बिकाशिरः ॥ छिनत्तितावत्पुरुषःखड्गपाणिरदृश्यत २९ ततएवा
शुपुरुषंदेवीचिच्छेदशायकैः ॥ तंखड्गचर्म्मणासार्द्धंततःसोऽभून्महागजः ३० करेणचमहा

रं माहिषासुरं सः महिषासुरः महामृधे महासंग्रामे महिषस्य इदं माहिषं तत् माहिषं रूपं स्वरूपम् २८ तत इति हे रा
जन् ! ततः सः सद्यः सिंहः अभवत् अम्बिका तस्य शिरः यावत् छिनत्ति तावत् देव्या खड्गपाणिः पुरुषः अदृश्यत ततः
तदनन्तरं माहिषरूपत्यागानन्तरं सः महिषासुरः सद्यः तत्क्षणं अम्बिका देवी तस्य महिषासुरस्य शिरः मस्तकम्
खड्गः पाणौ यस्य सः खड्गपाणिः पाणौ हस्ते २९ तत इति हे राजन् ! ततः देवी आशुएव खड्गचर्म्मणा सार्द्धं तं
पुरुषं शायकैः चिच्छेद ततः सः महागजः अभूत् ततः तदनन्तरंपुरुषदेहप्राशनानन्तरं आशुएव शीघ्रमेव खड्गश्च ६०

चर्म्मच ते खड्गचर्म्मणी खड्गचर्म्मणोः समाहारः खड्गचर्म्म तेन खड्गचर्म्मणा समाहारः सभूहः सार्द्धं सह शा
यकैः वाणैः ततः तदनन्तरं पुरुषदेहच्छेदनानन्तरं सः महिषासुरः महांश्चासौ गजश्च महागजः गजः हस्ती ३० करे
णेति हे राजन्! किंच सः तं महासिंहं करेण चकर्ष किंच जगर्ज्ज देवी तु कर्षतः करं खड्गेन निरकृन्तत सः महिषासुरः
महांश्चासौ सिंहश्च महासिंहः तं महासिंहं करेण शुण्डादण्डेन कर्षतीति कर्षन् तस्य कर्षतः कर्षतः महागजस्य करं
शुण्डादण्डम् ३१ तत इति हे राजन्! ततः महासुरः माहिषं वपुः आस्थितः सन् भूयः तथैव सचराचरं त्रैलोक्यं क्षोभया

सिंहंतंचकर्षजगर्जच ॥ कर्षतस्तुकरंदेवीखड्गेननिरकृन्तत ३१ ततोमहासुरोभूयोमाहिषंवपुरा
स्थितः॥ तथैवक्षोभयामासत्रैलोक्यंसचराचरम् ३२ ततःक्रुद्धाजगन्माताचण्डिकापानमुत्तमम्॥
पपौपुनःपुनश्चैवजहासारुणलोचना ३३ ननर्द्दचासुरःसोपिबलवीर्य्यमदोद्धतः ॥ विषाणाभ्यां

मास ततः तदनन्तरं गजदेहत्यागानन्तरं महासुरः महिषासुरः महिषस्य इदं माहिषं तत् माहिषं वपुः शरीरं भूयः पु
नः चराश्च अचराश्च ते चराचराः चराचरैः सह वर्त्तमानं सचराचरं तत्सचराचरं चराः जङ्गमाः मनुष्यादयः अचराः
स्थावराः वृक्षपर्वतादयःसह वर्त्तमानं युक्तं त्रयोलोकास्तेषां भावस्त्रैलोक्यंतत् त्रैलोक्यम् ३२ तत इति हे राजन्! ततः जग
न्माता चण्डिका क्रुद्धासती उत्तमं पानं पपौ किंच पुनः पुनः एव जहास कथंभूता चण्डिका अरुणलोचना ततः तदन
न्तरं त्रैलोक्यव्याकुलतावलोकनानन्तरं जगता माता जगन्माता जगतां चतुर्द्दशलोकानां माता जननी उत्तमं श्रेष्ठं पानं

दु०टी० मद्यपानं अरुणे लोचने यस्याः सा अरुणलोचना अरुणे अरुणवर्णे लोचने नेत्रे ३३ ननर्देति हे राजन् ! बलवीर्य्य अ०
६२ मदोद्धतः अपि सः असुरः ननर्द किंच विषाणाभ्यां चण्डिकां प्रति भूधरान् चिक्षेप बलंच वीर्य्यंच बलवीर्य्ये बलवीर्य्या ३
भ्यां मदः बलवीर्य्यमदः बलवीर्य्यमदेन उद्धतः बलवीर्य्यमदोद्धतः बलं शरीरं वीर्य्यं उत्साहः उद्धतः उन्मत्तः असुरः
महिषासुरः विषाणाभ्यां शृङ्गाभ्यां भूधरान् पर्वतान् ३४ साचेति हे राजन् ! किंच सा तेन प्रहितान् शरोत्करैः चूर्णयन्ती
सती तं आकुलाक्षरं यथास्यात्तथा उवाच कथंभूता सा मदोद्धूतमुखरागा सा चण्डिका तेन महिषासुरेण प्रहितान् क्षिप्ता

चचिक्षेपचचण्डिकांप्रतिभूधरान् ३४ साचतान्प्रहितांस्तेनचूर्णयन्तीशरोत्करैः ॥ उवाचतंमदोद्धू
तमुखरागाकुलाक्षरम् ३५ देव्युवाच ॥ गर्जगर्जक्षणंमूढमधुयावत्पिबाम्यहम् ॥ मयात्वयिहते
त्रैवगर्जिष्यन्त्याशुदेवताः ३६ ऋषिरुवाच ॥ एवमुक्त्वासमुत्पत्यसारूढातंमहासुरम् ॥ पादेनाक्र

न् तान् भूधरान् पर्व्वतान् शराणां उत्कराः शरोत्कराः तैः शरोत्करैः शराणां बाणानां उत्कराः समूहाः चूर्णयतीति चू
र्णयन्ती तं महिषासुरं आकुलानि अक्षराणि यस्यां क्रियायां तत् आकुलाक्षरं आकुलानि अर्द्धोच्चारितानि अक्षराणि वर्णा
नि मदेन उद्धतः मुखेरागोयस्याःसामदोद्धूतमुखरागा मदेन मद्येन उद्धूतः अतिशयेन जातः रागः आरुण्यं ३५ दे
व्युवाच गर्जेति हे मूढ ! अहं मधु यावत् पिबामि तावत् त्वं क्षणं गर्ज गर्ज मयात्वयि अत्रहतेसति आशुएव देवताः गर्जि
ष्यन्ति मधु मद्यं क्षणं क्षणमात्रं अत्र अस्मिन् संग्रामे हतेसति प्रहारिते सति आशुएव शीघ्रमेव देवताः ३६ ऋषिरुवा ६२

च एवमिति हे राजन्! एवं उक्त्वा समुत्पत्य तं महासुरं आरूढा सा पादेन एनं आक्रम्य कण्ठेच शूलेनैनं अताडयत् एव अ०
अनेन प्रकारेण समुत्पत्य कूर्दनं कृत्वा तं महासुरं सा चण्डिका पादेन चरणेन एव महिषासुरं आक्रम्य दृढं बद्ध्वा ३७ ३
हे राजन्! ततः तया पदा आक्रान्तः अपि सः ततः निजमुखात् अर्द्धनिष्क्रान्तः एव देव्याः वीर्य्येण अतिसंवृतः ततः
तदनन्तरं शूलताडनानन्तरं तया देव्या पदा पादेन आक्रान्तः दृढंधृतः सः महिषासुरः ततः तस्मात् इति ततः निजं
चतत् मुखंच निजमुखं तस्मात् निजमुखात् निजं स्वकीयं अर्द्धनिष्क्रान्तः अर्द्धनिष्क्रान्तः एव निस्सृतार्द्धकायः एव

म्यकण्ठेचशूलेनैनमताडयत् ३७ ततःसोपिपदाक्रान्तस्तयानिजमुखात्ततः ॥ अर्द्धनिष्क्रान्त
एवातिदेव्यावीर्य्येणसंवृतः ३८ अर्द्धनिष्क्रान्तएवासौयुद्ध्यमानोमहासुरः ॥ तयामहासिनादे
व्याशिरश्छित्त्वानिपातितः ३९ ततोहाहाकृतंसर्व्वंदैत्यसैन्यंननाशतत् ॥ प्रहर्षञ्चपरंजग्मुःसक

वीर्य्येण पराक्रमेण अतिशयेन संवृतः प्रतिबद्धोभूत् ३८अर्द्धेति हे राजन्! तयादेव्या अर्द्धनिष्क्रान्तः एव युद्ध्यमानः अ
सौ महासुरः शिरः महासिना छित्त्वा निपातितः अर्द्धनिष्क्रान्तः एव निस्सृतार्द्धकायः एव युद्ध्यते इति युद्ध्यमानःम
हासुरः महिषासुरः महांश्चासौ असिश्च महासिः तेन महासिना असिः खड्गः शिरः मस्तकं निपातितः हतः ३९ तत
इति हे राजन्! ततः सर्व्वंतद्दैत्यसैन्यं हाहाकृतं सत् ननाश किंच सकलाः देवतागणाः परं प्रहर्षं जग्मुः ततः तदन
न्तरं महिषासुरवधानन्तरं सर्वं वधावशिष्टं दैत्यानां सैन्यं दैत्यसैन्यं ननाश पलायितं सकलाः समस्ताः देवतानांगणाः ६३

दु०टी० देवतागणाः गणाः समूहाः परं अत्यन्तं प्रहर्षं आनन्दं जग्मुः प्रापुः ४० तुष्टुवुरिति हे राजन्! सुरास्तांदेवीं दिव्यैर्महर्षिभिः अ०
६४ सहतुष्टुवुः किंच गन्धर्वपतयः जगुः किंच अप्सरोगणाः ननृतुः सुराः देवाः इन्द्रादयः दिविभवा दिव्याःतैर्दिव्यैर्दिवि ३
स्वर्गे महांतश्चते ऋषयश्च महर्षयः तैः महर्षिभिः महान्तः श्रेष्ठाः तुष्टुवुः स्तुतवन्तः गन्धर्वाणांपतयः गन्धर्वपतयः
पतयः स्वामिनः अप्सरसांगणाः अप्सरोगणाः अप्सरसां स्वर्वेश्यानां गणाः समूहाः ननृतुः नृतवत्यः ४१ इति श्रीनागो
जिभट्टसम्मतकृते सप्तशतीव्याख्याने महिषासुरवधोनाम तृतीयोऽध्यायः ३ ॥ ० ॥ ० ॥

लादेवतागणाः ४० तुष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः ॥ जगुर्गन्धर्वपतयोननृतुश्चाप्सरो
गणाः ४१ इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येमहिषासुरवधोनामतृतीयो
ऽध्यायः ३ ॥ ० ॥ ० ॥ ० ॥ ० ॥

ऋषिरुवाच ॥ शक्रादयःसुरगणानिहतेतिवीर्य्येतस्मिन्दुरात्मनिसुरारिबलेचदेव्या ॥ तांतुष्टु

स्तुतिमाह ऋषिरुवाच शक्रादयइति हे राजन्! देव्या अतिवीर्य्ये दुरात्मनि तस्मिन् किंच सुरारिबले निहतेसति श
क्रादयः सुरगणाः तां वाग्भिःतुष्टुवुः कथंभूताः सुरगणाः प्रणतिनम्रशिरोधरांसाः पुनः कथंभूताः सुरगणाः प्रहर्षपुल
कोद्गमचारुदेहाः अतिवीर्य्यं यस्यसः अतिवीर्य्यः तस्मिन् अतिवीर्य्ये अति अत्यन्तं वीर्य्यंपराक्रमः दुष्टः आत्मा यस्य
सः दुरात्मा तस्मिन् दुरात्मनि दुष्टः कुटिलः आत्मा अन्तःकरणं तस्मिन् महिषासुरे सुराणां अरयः सुरारयः सुरारीणां ६४

 बलं सुरारिबलं तस्मिन् सुरारिबले सुराणां देवानां अरयः शत्रवः दैत्याः बलं सैन्यं निहतेसति प्रहारितेसति शक्रः 
 आदिर्येषांते शक्रादयः शक्रः इन्द्रः सुराणां गणाः सुरगणाः सुराणां देवानां गणाः समूहाः तां देवीं तुष्टुवुः स्तुतवन्तः ४
शिरोधराश्च अंसाश्च प्राण्यङ्गत्वादेकवद्भावः शिरोधरांसं प्रणत्या नम्रं शिरोधरांसं येषां ते प्रणतिनम्रशिरोधरांसा
शिरोधराः ग्रीवाः अंसाः स्कन्धाः नम्रं नम्रीभूतं पुलकानां उद्गमः पुलकोद्गमः प्रहर्षेण पुलकोद्गमः प्रहर्षपुलकोद्गमः
प्रहर्षपुलकोद्गमेन चारवः देहाः येषां ते प्रहर्षपुलकोद्गमचारुदेहाः पुलकानां रोमाञ्चानां उद्गमः प्रादुर्भावः प्रहर्षेण

वुःप्रणतिनम्रशिरोधरांसावाग्भिःप्रहर्षपुलकोद्गमचारुदेहाः १ देव्यायया ततमिदंजगदात्मश
क्त्यानिश्शेषदेवगणशक्तिसमूहमूर्त्या॥तामम्बिकामखिलदेवमहर्षिपूज्यांभक्त्यानताःस्मविदधा

आनन्देन चारवः मनोहराः देहाः शरीराणि १ देव्येति निश्शेषदेवगणशक्तिसमूहमूर्त्या यया देव्या आत्मशक्त्या
इदं जगत् ततं वयं अखिलदेवमहर्षिपूज्यां तां अम्बिकां भक्त्यानतास्स्मःसानःशुभानि विदधातु देवानां गणाःदेवगणाः
निश्शेषाश्चते देवगणाश्च निश्शेषदेवगणाः निश्शेषदेवगणानां शक्तयः निश्शेषदेवगणशक्तयः निश्शेषदेवगणशक्ती
नां समूहः निश्शेषदेवगणशक्तिसमूहःनिश्शेषदेवगणशक्तिसमूहःएव मूर्त्तिर्यस्यास्सा निश्शेषदेवगणशक्तिसमूहमूर्त्तिः त
यानिश्शेषदेवगणशक्तिसमूहमूर्त्या देवानां इन्द्रादीनां गणाः समूहाः निश्शेषाः समस्ताः मूर्त्तिः विग्रहः देहः आत्मनः
शक्तिः आत्मशक्तिः तया आत्मशक्त्या ततं विस्तारितं देवाश्च महर्षयश्च ते देवमहर्षयः अखिलाश्च देवमहर्षयश्च अखि 

 लदेवमहर्षयः अखिलदेवमहर्षिभिःपूज्या अखिलदेवमहर्षिपूज्या तां अखिलदेवमहर्षिपूज्यां देवाःइन्द्रादयःमहर्षयःनारदा 
 दयः अखिलाः समस्ताः तां प्रसिद्धां अम्बिकां देवीं नताःस्मः प्रणताःस्मः सा देवी नः अस्माकंशुभानि विदधातुकरोतु २ 
यस्याइति भगवान् अनन्तः किंच ब्रह्मा किंच हरः एतेयस्याः अतुलं प्रभावं किंच अतुलं बलं वक्तुं हि न अलं सा चण्डिका
अखिलजगत्परिपालनाय किंच अशुभभयस्य नाशाय मतिं करोतु अनन्तः सहस्रास्यः शेषः ब्रह्मा स्रष्टा हरः सर्व्वशक्तिः
शिवः यस्याः चण्डिकायाः अतुलं महान्तं प्रभावं तेजः अतुलं महत् बलं शरीरं हीति निश्चयेन न अलं न पर्य्याप्ताः न

तुशुभानिसानः २ यस्याःप्रभावमतुलंभगवाननन्तोब्रह्माहरश्चनहिवक्तुमलम्बलंच ॥ साचण्डि
काखिलजगत्परिपालनायनाशायचाशुभभयस्यमतिंकरोतु ३ याश्रीःस्वयंसुकृतिनांभवनेष्वल

समर्थाः भवन्ति सा चण्डिका अखिलंच तत् जगच्च अखिलजगत् अखिलजगतः परिपालनं अखिलजगत्परिपालनं तस्मै
अखिलजगत्परिपालनाय अखिलं समस्तं परिपालनं रक्षणं अशुभेभ्यः भयं अशुभभयं तस्य अशुभ भयस्य मतिं बुद्धिम् ३
या श्रीरिति या स्वयं सुकृतिनां भवनेषु श्रीः भवति या स्वयं पापात्मनां भवनेषु अलक्ष्मीः भवति या स्वयं कृताधियां
हृदयेषु बुद्धिः भवति या स्वयं सतां हृदयेषु श्रद्धा भवति या स्वयं कुलजनप्रभवस्य हृदयेषु लज्जा भवति वयं तां
त्वां नताः स्मः हे देवि! त्वं विश्वं परिपालय या देवी स्वयं स्वयमेव सुकृतमस्ति येषां ते सुकृतिनः तेषां सुकृतिनां सु
कृतं पुण्यं सुकृतिनां पुण्यात्मनां भवनेषु गृहेषु श्रीः लक्ष्मीः या देवी स्वयं स्वयमेव पापं विद्यते येषां ते पापात्मनः तेषां 

दु०टी० पापात्मनां भवनेषु गृहेषु अलक्ष्मीः ज्येष्ठा दरिद्रा या देवी स्वयं स्वयमेव कृतधियां निर्म्मलान्तःकरणानां बुद्धिः स्वर्गा अ०
६७ पवर्गसाधनं ज्ञानं या देवी स्वयं स्वयमेव सतां सज्जनानां श्रद्धा आस्तिक्यबुद्धिः या देवी स्वयं स्वयमेव कुलेजनःकुल ४
जनः कुलजनात् प्रभवो यस्य सः कुलजनप्रभवः तस्य कुलजनप्रभवस्य प्रभवः जन्म कुलजनप्रभवस्य शुद्धवंशज
न्मनः लज्जाकरणीयाप्रवृत्तिजनकान्तःकरणवृत्तिविशेषा तां देवीं नताःस्म प्रणताःस्म विश्वंजगत् ४ किमिति
हे देवि ! वयं सर्व्वेषु असुरदेवगणादिकेषु अचिन्त्यं एतत् तव रूपं किंवर्णयाम किंच असुरक्षयकारि भूरि अचिन्त्यं अति

दमीःपापात्मनांकृतधियांहृदयेषुबुद्धिः॥ श्रद्धासतांकुलजनप्रभवस्यलज्जातांत्वांनताः स्मपरिपा
लयदेविविश्वम् ४ किंवर्णयामतवरूपमचिन्त्यमेतत्किञ्चातिवीर्य्यमसुरक्षयकारिभूरि॥ किञ्चाह
वेषुचरितानितवातियानि सर्व्वेषुदेव्यसुरदेवगणादिकेषु ५ हेतुःसमस्तजगतांत्रिगुणापिदोषैर्न

वीर्य्यं किं वर्णयाम किंच वयं आहवेषु अति यानि अचिन्त्यानि तव चरितानि किं वर्णयाम सर्व्वेषु समस्तेषु असुराश्च
देवाश्च गणाश्चते असुरदेवगणाः अमरदेवगणाः आदिर्येषांते असुरदेवगणादिकाः तेषु असुरदेवगणादिकेषु असुराःदै
त्याः देवाः शिवादयः गणाः प्रमथाः अचिन्त्यं चिन्तितुं योग्यं चिन्त्यं न चिन्त्यं अचिन्त्यं तत् अचिन्त्यं सर्वोत्कृष्टत्वात्
अतिरूपिणी स्वं रूपं स्वरूपं किं केनप्रकारेण किं केन प्रकारेणेति सर्व्वत्र असुराणां क्षयः असुरक्षयः असुरक्षयं करो
तीति असुरक्षयकारि तत् असुरक्षयकारि क्षयः नाशः भूरि महत् अति अत्युत्कृष्टं वीर्य्यं पराक्रमं आहवेषु युद्धेषु अतियानि ६७

दु०टी० अत्युत्कृष्टानि चरितानि कर्माणि ५ हेतुरिति हे देवि ! त्वं समस्तजगतां हेतुः भवसि किंच हरिहरादिभिः अपि त्रिगुणा अ०
६८ अपि अपारा त्वं दोषैः नज्ञायसे किंच त्वं सर्व्वाश्रया भवसि किंच अखिलं इदं जगत् तव अंशभूतं भवति किंच त्वं अव्या ४
कृता भवसि हि किंच परमा त्वं सर्व्वस्य आद्याप्रकृतिः भवसि समस्तानिच तानि जगन्तिच समस्तजगन्ति तेषां सम
स्तजगतां समस्तानि सम्पूर्णानि जगन्ति चतुर्द्दशलोकाः हेतुः मूलकारणं हरिश्च हरश्च तौ हरिहरौ हरिहरौ आदीयेषां
ते हरिहरादयः तैः हरिहरादिभिः हरिः विष्णुः हरः शिवः त्रयोगुणाः यस्याः सा त्रिगुणा त्रिगुणाः सत्त्वरजस्तमांसि

ज्ञायसेहरिहरादिभिरप्यपारा ॥ सर्व्वाश्रयाखिलमिदंजगदंशभूतमव्याकृताहिपरमाप्रकृतिस्त्व
माद्या ६ यस्याःसमस्तसुरतासमुदीरणेनतृप्तिंप्रयातिसकलेषुमखेषुदेवि ॥ स्वाहासिवैपितृग

नास्ति पारो यस्याः सा अपारा पारः अन्तः दोषैः रागादिभिः सर्वः आश्रयो यस्याः सा सर्व्वाश्रयः आश्रयः कार्य्यं अ
खिलं समस्तं अव्याकृता षड्विधविकाररहिता नाम रूपरहिता हीति निश्चयेन परामायस्याः सा परमा परा उत्कृ
ष्टामा माया आद्या प्रथमा प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था ६ यस्या इति हे देवि ! समस्तसुरता यस्याः समु
दीरणेन सकलेषु मखेषु तृप्तिं प्रयाति सा स्वाहा त्वमेवासि किं च या स्वधा पितृगणस्य तृप्तिहेतुः भवति सा स्वधा
त्वमेवासि अतएव जनैः देवकर्म्मणि त्वं स्वाहा उच्चार्य्यसे किंच पितृकर्म्मणि त्वं स्वधा उच्चार्य्यसे सुराणां समूहः
सुरता समस्ताचासौ सुरता च समस्तसुरता सुराणां देवाना समस्तं सम्पूर्णं समस्तसुरता सकलसुरसमूहः य ६८

दु०टी० स्याः स्वाहायाः समुदीरणेन उच्चारणेन सकलेषु समस्तेषु मखेषु यज्ञेषु प्रयाति प्राप्नोति पितृणां गणः पितृगणः तस्य अ०
६९ पितृगणस्य गणः समूहः तृप्तेः हेतुः तृप्तिहेतुः हेतुः कारणं ७ हे देवि ! अविचिन्त्य महाव्रताया विद्यामुक्तिहेतुः भवति ४
भगवती परमा सा विद्या त्वमेवासि हि अस्तसमस्तदोषैः सुनियतेन्द्रियतत्त्वसारैः मोक्षार्थिभिः मुनिभिः त्वं अभ्यस्य
से महच्च तत् व्रतं च महाव्रतं विशेषेण चिन्तितुं योग्यं विचिन्त्यम् न विचिन्त्यं अविचिन्त्यं अविचिन्त्यं महाव्रतं यस्याः
सा अविचिन्त्यमहाव्रता अविचिन्त्यं अनुष्टेयत्वाचिन्त्याचिन्ताया अविषयं महाव्रतं अहिंसा सत्यास्तेयब्रह्मचर्य्याप

णस्यचतृप्तिहेतुरुच्चार्यसेत्वमतएवजनैःस्वधाच ७ यामुक्तिहेतुरविचिन्त्यमहाव्रताचअभ्यस्य
सेसुनियतेन्द्रियतत्त्वसारैः ॥ मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासिसाभगवतीपरमाहिदेवि
८ शब्दात्मिकासुविमलर्ग्यजुषांनिधानमुद्गीथरम्यपदपाठवतांचसाम्नाम् ॥ देवीत्रयीभगव

रिग्रहरूपं योगशास्त्रप्रसिद्धं साधनं भगवती भगवद्विषया परमा उत्कृष्टा विद्या तद्विषयावरणभञ्जिका ब्रह्मज्ञानरू
पा हि यतः समस्ताश्च ते दोषाश्च समस्तदोषाः अस्ताः समस्तदोषाः येषां ते अस्तसमस्तदोषाः तैः अस्तसम
स्तदोषैः समस्ताः सम्पूर्णाः दोषाः रागादयः अस्ताः नष्टाः तत्त्वंसारो येषां ते तत्त्वसाराः सुनियतानि इन्द्रियाणि यैः
ते सुनियतेन्द्रियाः सुनियतेन्द्रियाः अतएव तत्त्वसाराः ते सुनियतेन्द्रियतत्त्वसाराः तैः सुनियतेन्द्रियतत्त्वसारैः त
त्वं ब्रह्मैव सुनियतानि वशीकृतानि इन्द्रियाणि मनश्चक्षुरादीनि मोक्षएव अर्थः मोक्षार्थः मोक्षार्थोऽस्ति येषां ते मो ६९

क्षार्थिनः तैः मोक्षार्थिभिः अर्थः प्रयोजनम् मननशीलाः मुनयः तैः मुनिभिः ८ शब्देति हे देवि ! त्वं शब्दात्मिका भवसि
त्वं सुविमलर्ग्यजुषां किंच उद्गीथरम्यपदपाठवतां साम्नां निधानं भवसि या देवी भगवती त्रयी भवति सात्व
मेवासि या वार्त्ता भवभावनाय भवति सा वार्तात्वमेवासि त्वं सर्व्वजगतां परमार्त्तिहन्त्री भवसि शब्दः आत्मा अ
स्याः सा शब्दात्मिका आत्मा स्वरूपं शब्दात्मिका शब्दब्रह्मरूपा ऋक्च यजूंषिच तानि ऋग्यजूंषि सुविमलानि च
तानि ऋग्यजूंषिच सुविमलर्ग्यजूंषि तेषां सुविमलर्ग्यजुषां ऋक् ऋग्वेदशाखाः यजुः यजुर्वेदशाखाः सुविमलानि
अपूर्व्वत्वेन दोषरहितानि पदानां पाठः पदपाठः उद्गीथेन रम्यः उद्गीथरम्यः उद्गीथरम्यश्चासौ पदपाठश्च उद्

**तीभवभावनायवार्त्ता चसर्व्वजगतांपरमार्त्तिहन्त्री ९ मेधासिदेविविदिताखिलशास्त्रसारादुर्गा**

गीथरम्यपदपाठः उद्गीथरम्यपदपाठो विद्यते येषां ते उद्गीथरम्यपदपाठवन्तः तेषां उद्गीथरम्यपदपाठवताम्
उद्गीथेन भक्तिविशेषेण रम्यः मनोहरः साम्नाम् सामवेदशाखानाम् देवी द्योतनशीला भगवती भगवद्विषया त्रयी
वेदत्रयी सा वेदत्रयी वार्त्ता कृषिः वाणिज्यपशुपालनरूपा भवतीति भावः भवानां भावनं भवभावनं तस्मै भवभाव
नाय भवानां प्राणिनां भावनं जीवनं सर्व्वाणि च तानि जगन्तिच सर्व्वजगन्ति तेषां सर्वजगतां सर्वाणि समस्तानि
जगन्ति चतुर्द्दशलोकाः परमाचासौ आर्तिश्च परमार्त्तिः परमार्तेः हन्त्री परमार्त्तिहन्त्री परमा अतिशयिता उत्कृष्टा आ
र्त्तिः पीडा हन्त्री नाशकर्त्री ९ मेधासीति हे देवि ! विदिताखिलशास्त्रसारा या मेधा भवति सामेधा त्वमेवासि त्वं दुर्गा

दु०टी० असि असङ्गा त्वं दुर्गभवसागरनौरसि कैटभारिहृदयैककृताधिवासा या श्रीः भवति सा श्रीः त्वमेवासि शशिमौलि अ०
७१ कृतप्रतिष्ठा या गौरी भवति सा गौरी त्वमेवासि अखिलानिच तानि शास्त्राणि अखिलशास्त्राणि अखिलशास्त्राणां सारः ४
अखिलशास्त्रसारः विदितःअखिलशास्त्रसारो यया सा विदिताखिलशास्त्रसारा अखिलानि समस्तानि शास्त्राणि व्या
करणादीनि सारः तत्त्वं विदितः ज्ञातः मेधासरस्वती सा मेधा त्वमेवासि दुर्गा दुर्जया दुःखेन जेतुं अशक्या दुर्जया ना
स्ति सङ्गो यस्याः सा असङ्गा सङ्गः सम्बन्धः भव एव सागरः भवसागरः दुर्गश्चासौ भवसागरश्च दुर्गभवसागरः दुर्ग

सिदुर्ग्गभवसागरनौरसङ्गा ॥ श्रीःकैटभारिहृदयैककृताधिवासागौरीत्वमेवशशिमौलिकृतप्रति
ष्ठा १०ईषत्सहासमलंपरिपूर्णचन्द्रबिम्बानुकारिकनकोत्तमकान्तिकान्तम्॥ अत्यद्भुतंप्रहृतमात्त

भवसागरस्यनौः दुर्गभवसागरनौः भव एव संसार एव सागरः समुद्रः दुर्गा गहनानौः ज्ञानद्वारा कैटभारेः हृदयं कैट
भारिहृदयं कैटभारिहृदये एकः कृतः अधिवासो यया सा कैटभारिहृदयैककृताधिवासा कैटभारेःविष्णोः अधिवासः
निवासःश्रीःलक्ष्मीःशशीमौलौ यस्यसःशशिमौलिःशशिमौलौकृता प्रतिष्ठा यया सा शशिमौलिकृतप्रतिष्ठा शशीचन्द्रः
मौलिः मस्तकं शशिमौलौ शिवे प्रतिष्ठास्थितिः गौरी पार्वती १० ईषदिति हे देवि ! तव वक्त्रं विलोक्यापि आत्तरुषा
महिषासुरेण सहसा तथा यत् प्रहृतं तत् अत्यद्भुतं भवति कथंभूतं वक्त्रं ईषत्सहासं पुनःकथंभूतं वक्त्रं अमलं पुनः कथंभूतं
वक्त्रं परिपूर्णचन्द्रबिम्बानुकारि पुनः कथंभूतं वक्त्रं कनकोत्तमकान्ति पुनः कथंभूतं वक्त्रं कान्तं मुखं विलोक्यापि दृष्ट्वापि ७१

दु०टी० आत्तः आरूढः रुट् यस्य सः आत्तरुट् तेनआत्तरुषा आत्तः प्राप्तः रुट्क्रोधः सहसादर्शनसमकालमेव तथा अतिनिष्ठुरं अ०
७२ अत्यद्भुतं अत्याश्चर्य्यं ईषद्धासेन सहवर्त्तमानं ईषत्सहासं तत् ईषत्सहासं ईषद्धासेन स्वल्पहासेन सहवर्त्तमानं युक्तं ४
अमलं स्वच्छं परिपूर्णश्चासौ चन्द्रश्च परिपूर्णचन्द्रः परिपूर्णचन्द्रस्य बिम्बः परिपूर्णचन्द्रबिम्बः परिपूर्णचन्द्राबिम्बं
अनुकरोतीति परिपूर्णचन्द्रबिम्बानुकारि तत्परिपूर्णचन्द्राबिम्बानुकारि बिम्बः मण्डलं अनुकरोतीति सदृशीकरोति
कनकेषु उत्तमः कनकोत्तमः कनकोत्तमस्य कान्तिरिव कान्तिर्यस्य तत् कनकोत्तमकान्ति कनकेषु सुवर्णेषु उत्तमः

रुषातथापिवक्त्रंविलोक्यसहसामहिषासुरेण ११ दृष्ट्वातुदेविकुपितंभ्रुकुटीकरालमुद्यच्छशाङ्कस
दृशाच्छवियन्नसद्यः ॥ प्राणान्मुमोचमहिषस्तदतीवचित्रंकैर्जीव्यतेहिकुपितान्तकदर्शनेन १२ दे

श्रेष्ठः कान्तं मनोहरं ११ दृष्ट्वेति हे देवि ! तव वक्त्रं दृष्ट्वा माहिषः तु प्राणान् सद्यः यन्न मुमोच तत् अतीव चित्रं भवति कथं
भूतं वक्त्रं कुपितं पुनः कथंभूतं भ्रुकुटीकरालं पुनःकथंभूतं वक्त्रं उद्यच्छशाङ्कसदृशच्छवि कुतः कस्माद्धेतोः हि यतः
हेतोःकैः कुपितान्तकदर्शनेन जीव्यते न जीव्यत इति भावः वक्त्रं मुखारविन्दं महिषः महिषासुरः सद्यः तत्क्षणंअतीव
चित्रं अतीवाश्चर्य्यं कुपितं क्रोधयुक्तं भ्रुवोः कुटी भ्रुकुटी भ्रुकुट्या करालं भ्रुकुटीकरालं तत् भ्रुकुटीकरालं कुटी वक्रता
करालं भीषणं भयंकरं उद्यतीति उद्यन् उद्यंश्चासौ शशाङ्कश्च उद्यच्छशाङ्कः उद्यच्छशाङ्कस्य सदृशी छविर्यस्य तत् उ
द्यच्छशाङ्कसदृशच्छवि शशाङ्कः चन्द्रः सदृशी तुल्या छविः कान्तिः कुपितश्चासौ अन्तकश्च कुपितान्तकः कुपितान्त ७२

दु०टी० कस्य दर्शनं कुपितान्तकदर्शनं तेन कुपितान्तकदर्शनेन कुपितः क्रोधायमानः अन्तकः कालः १२ देवीति हे देवि! त्वं प्र अ०
७३ सीद परमा भवती त्वं कोपवतीसती सद्यः भवाय कुलानि विनाशयसि त्वया महिषासुरस्य सुविपुलं एतत् बलं अस्तं ४
यत् नीतं अस्माभिः अधुनैव एतत् विज्ञातं प्रसीद प्रसन्ना भव परा मा यस्याः सा परमा परा सानुग्रहा मा बुद्धिः कोपो
स्ति यस्याः सा कोपवती कोपः क्रोधः सद्यः तत्क्षणं भवाय संसाराय कुलानि असुरकुलानि सुविपुलं महत् बलं सै
न्यं अस्तं नाशं नीतं प्रापितम् १३ ते इति हे देवि ! अभ्युदयदा भवति येषां सदा प्रसन्ना भवति ते जनपदेषु सम्मताः

विप्रसीदपरमाभवतीभवायसद्योविनाशयसिकोपवतीकुलानि ॥ विज्ञातमेतदधुनैवयदस्तमेतन्नी
तंबलंसुविपुलंमहिषासुरस्य १३ तेसम्मताजनपदेषुधनानितेषांतेषांयशांसिनचसीदतिधर्म्म
वर्ग्गः ॥ धन्यास्तएवनिभृतात्मजभृत्यदारायेषांसदाभ्युदयदाभवतीप्रसन्ना १४ धर्म्याणिदेवि

भवन्ति तेषां धनानि भवन्ति तेषां यशांसि भवन्ति ते किंच तेषां धर्मवर्गः न सीदति निभृतात्मजभृत्यदाराः तएव
धन्याः भवन्ति अभ्युदयंददातीति अभ्युदयदा अभ्युदयं सर्व्वं मनोरथं येषां जनानां सदा सर्व्वदा ते जनाःते जनपदेषु
देशेषु सम्मताः महाजनाङ्गीकृताः तेषां जनानां यशांसि कीर्त्तयः तेषां जनानां धर्म्मवर्गः धर्मघटितो वर्गः धर्म्मवर्गःध
र्म्मार्थकाममोक्षरूपं न सीदति न नष्टो भवति आत्मजाश्च भृत्याश्च दाराश्च ते आत्मजभृत्यदाराः निभृताः आत्मज
भृत्यदाराः येषां ते निभृतात्मजभृत्यदाराः आत्मजाः पुत्राः भृत्याः सेवकाः दाराः कलत्राणि निभृताः नितरां पोषिताः ७३

 नितरां अत्यन्तं ते एव जनाः धन्याः पुण्यबलेन प्रसिद्धाः १४ धर्म्याणीति हे देवि ! भवती प्रसादात् यः सुकृती अन्या हतः सन् धर्म्याणि सकलानि कर्म्माणि प्रतिदिनं सदैव करोति सः सुकृती ततः स्वर्ग प्रयाति हे देवि ! तेन अस्माभिः त्वं लोकत्रये अपि ननु फलदा ( फलदा–फलदात्री ) इति ज्ञायसे भवत्याः प्रसादः भवतीप्रसादः तस्मात् भवतीप्रसा दात् प्रसादः प्रसन्नता सुकृती प्राग्जन्मार्जितपुण्यवान् अत्यादृतः सन् अतिप्रसिद्धवान् सन् धर्म्मादनुपेतानि धर्म्या णि तानि धर्म्याणि अनुपेतानि युक्तानि सकलानि नित्यनैमित्तिकादीनि दिनं दिनं प्रतीति प्रतिदिनं सदैव सर्व्वदैव 

सकलानिसदैवकर्म्माण्यत्यादृतः प्रतिदिनंसुकृतीकरोति॥स्वर्गंप्रयातिचततोभवतीप्रसादाल्लोक त्रयेपिफलदाननुदेवितेन १५ दुर्गेस्मृताहरसिभीतिमशेषजन्तोः स्वस्थैःस्मृतामतिमतीवशुभां

ततः तदनन्तरं नित्यनैमित्तिककर्मानुष्ठानानन्तरं प्रयाति प्राप्नोति तेन कारणेन लोकानां त्रयं लोकत्रयं तस्मिन् लोक त्रये लोकानां स्वर्गमर्त्यपातालानां त्रयं सम्भूतं ननु इति निश्चयेन फलं ददातीति फलदा फलं स्वर्गादिफलम् १५ दुर्गइति हे दुर्गे ! जनैः त्वं स्मृतासती अशेषजन्तोःभीतिं हरसि स्वस्थैः त्वं स्मृतासती अतीवशुभां मतिं ददासि हे दारि द्रयदुःखभयहारिणि ! सर्वोपकारकरणाय सदार्द्राचित्ता त्वत् अन्या का भवति न कापीत्यर्थः अशेषश्चासौ जन्तुश्च अ- शेषजन्तुः तस्य अशेषजन्तोः अशेषः सम्पूर्णः जन्तुः प्राणी भीतिर्भयं स्वस्थैः स्वस्थचित्तैः जनैः अतीव अत्यन्तमेव शुभां कल्याणकारिणीं मतिं बुद्धिं दरिद्रस्य भावः दारिद्र्यं दारिद्र्यात् दुःखं दारिद्र्यदुःखं दारिद्र्यदुःखात् भयं दारिद्र्यदुःख

भयं दारिद्र्यदुःखभयं हरतीति दारिद्र्यदुःखभयहारिणी तत्सम्बोधने हे दारिद्र्यदुःखभयहारिणि! भावः धर्म्मः भयं त्रासः सर्वेषां उपकारः सर्वोपकारः सर्वोपकारस्य करणं सर्व्वोपकारकरणं तस्मै सर्व्वोपकारकरणाय सर्व्वेषां जनानां सदा आर्द्रचित्तं यस्याः सा सदार्द्रचित्ता सदा सर्वदा आर्द्रं कोमलं चित्तं अन्तःकरणं त्वत् त्वत्तः १६ एभिरिति हे देवि ! जगत् हतैः एभिः सुखं उपैति एते नाम नरकाय चिराय पापं कुर्वन्तु तथा संग्रामे मृत्युं अधिगम्य दिवं प्रयान्तुइति मत्वा त्वं अहितान् नूनं विनिहंसि हतैः प्रहारितैः एभिः दैत्यैः उपैति प्राप्नोति उपैतीत्यर्थः एते दैत्याः नाम इति



दुदासि ॥ दारिद्र्यदुःखभयहारिणिकात्वदन्यासर्व्वोपकारकरणायसदार्द्रचित्ता १६ एभिर्हतैर्जग
दुपैतिसुखंतथैतेकुर्वन्तुनामनरकायचिरायपापम् ॥ संग्राममृत्युमधिगम्यदिवंप्रयान्तुमत्वेतिनून
महितान्विनिहंसिदेवि १७ दृष्ट्वैवकिंनभवतीप्रकरोतिभस्मसर्व्वासुरानरिषुयत्प्रहिणोषिशस्त्रम् ॥

अभ्युपगमे नरकाय चिरकालपर्य्यन्तं संग्रामे मृत्युः संग्राममृत्युः तं संग्राममृत्युं मृत्युः मरणं अधिगम्य प्राप्य दिवं स्वर्गं प्रयान्तु गच्छन्तु इति हेतुद्वयं मत्वा मनसि विचार्य अहितान् शत्रून् दैत्यान् नूनं निश्चयेन विनिहंसि नाशयसि १७ हे देवि ! भवती सर्वान् असुरान् दृष्ट्वा एव भस्म किंन प्रकरोति त्वं अरिषु शस्त्रं यत् प्रहिणोषि तत् रिपवः अपि शस्त्र पूताः सन्तः लोकान्हि प्रयान्तु इत्थं तेषु अपि ते मतिः अतिसाध्वी भवति सर्व्वेच ते असुराश्चतेसर्व्वासुराः तान् सर्व्वासुरान् सर्व्वे समस्ताः असुराः दैत्याः दृष्ट्वैव दर्शनमात्रेणैव अरिषु शत्रुषु दैत्येषु प्रहिणोषि पातयसि रिपवः शत्रवः

दैत्याः शस्त्रैः पूताः शस्त्रपूताः पूताः पवित्राः लोकान् स्वर्गादिलोकान् हीति निश्चयेन प्रयान्तु गच्छन्तु इत्थं अनेन प्रकारेण तेषु रिपुषु दैत्येषु ते तव मतिः बुद्धिः अतिसाध्वी अतिसमीचीना १८ खड्गेति हे देवि! असुराणां दृशः खड्गप्रभानिकरविस्फुरणैः तथोग्रशूलाग्रकान्तिनिवहेन विलयं यत् न आगताः तत् एतत् तव अंशुमत् इन्दुखण्डयोग्यानन विलोकयतां चक्षुषां आश्चर्य्यं भवति असुराणां दैत्यानां दृशः दृष्टयः खड्गस्य प्रभाः खड्गप्रभाः खड्गप्रभाणां निकरः खड्गप्रभानिकरः खड्गप्रभानिकरस्य विस्फुरणाः खड्गप्रभानिकरविस्फुरणाः तैः खड्गप्रभानिकरविस्फुर

लोकान्प्रयान्तुरिपवोपिहिशस्त्रपूता इत्थंमतिर्भवतितेष्वपितेतिसाध्वी १८ खड्गप्रभानिकरवि
स्फुरणैस्तथोग्रैःशूलाग्रकान्तिनिवहेनदृशोसुराणाम्॥यन्नागताविलयमंशुमदिन्दुखण्डयोग्यानन
तवविलोकयतांतदेतत् १९ दुर्वृत्तवृत्तशमनंतवदेविशीलं रूपंतथैतदविचिन्त्यमतुल्यमन्यैः॥

णैः प्रभाः कान्तयः निकरः समूहः विस्फुरणाः सर्व्वत्रप्रसरणाः स्फुलिंगाः शूलस्य अग्रं शूलाग्रं उग्रंच तत् शूलाग्रंच उग्रशूलाग्रं उग्रशूलाग्रस्य कान्तयः उग्रशूलाग्रकान्तयः उग्रशूलाग्रकान्तीनां निवहः उग्रशूलाग्रकान्तिनिवहः तेन उग्रशूलाग्रकान्तिनिवहेन अग्रं अग्रभागः उग्रं भयानकं निवहः समूहः विलयंनाशं न आगताः न प्राप्ताः अंशवो विद्यन्ते यस्मिन् तत् अंशुमत् तत् अंशुमत् अंशवः कान्तयः इन्दोः खण्डः इंदुखंडः इंदुखंडस्ययोग्यं इंदुखंडयोग्यं इंदुखण्डयोग्यं च तत् आननंच इन्दुखण्डयोग्याननं तत् इन्दुखण्डयोग्याननं इन्दोः चन्द्रस्य खण्डः अर्द्धभागः योग्यं सदृशं आननं

दु०टी० मुखारविन्दं विलोकयन्तीति विलोकयन्तः तेषां विलोकयतां विलोकयन्ति पश्यन्ति चक्षुषां नेत्राणां आश्रयः आधारः१६ दु अ०
७७ वृत्तेति हे देवि! तवशीलं दुर्वृत्तशमनं भवति तथा अन्यैःअतुल्यं एतत् तवरूपं अविचिन्त्यं भवति किञ्च तव वीर्य्यं हृतदेवपरा ४
क्रमाणां हन्तृ भवति इत्थंत्वया दया एव वैरिषु अपिप्रकटिता शीलं स्वाभाविकोगुणःदुष्टं वृत्तंयेषां तेदुर्वृत्ताःदुर्वृत्तानांवृत्तंदुर्वृ
त्तवृत्तं दुर्वृत्तवृत्तस्य शमनं दुर्वृत्तवृत्तशमनं वृत्तं आचरणं दुर्वृत्तानां पापात्मनां वृत्तं पापं शमनं नाशं अतुल्यं असाधारणंरूपं
आकृतिः विशेषेण चिन्तितुं योग्यं विचिन्त्यं न विचिन्त्यं अविचिन्त्यं वीर्य्यं पराक्रमःदेवानां पराक्रमःदेवपराक्रमःहृतोदेवप

वीर्य्यंचहन्तृहृतदेवपराक्रमाणांवैरिष्वपिप्रकटितैवदयात्वयेत्थम् २० केनोपमाभवतुतेस्यपराक्
मस्यरूपञ्चशत्रुभयकार्य्यतिहारिकुत्र ॥ चित्तेकृपासमरनिष्ठुरताचदृष्टात्वय्येवदेविवरदेभुवनत्र

राक्रमो यैस्ते हृतदेवपराक्रमाः तेषां हृतदेवपराक्रमाणां हृतदेवपराक्रमाणां दैत्यानां हन्तृ नाशकं इत्थं अनेन प्रकारेण
वैरिषु शत्रुषु दैत्येषु प्रकटिता प्रकटीकृता २०केनेति हे देवि! वरदे! ते अस्य पराक्रमस्य उपमा केन भवतु किञ्च तवरूपं
कुत्र शत्रु भयकारि भवति कुत्र अतिहारि भवति अस्माभिः भुवनत्रये अपि एव चित्तेकृपादृष्टा किञ्च समरनिष्ठुरता
दृष्टा तेनैव वरंददातीति वरदा तत्सम्बोधने हे वरदे! वरं वरदानं ते तव रूपं स्वरूपं कुत्र कुत्रापि शत्रूणां भयं शत्रुभयं
करोतीति शत्रुभयकारि भयं त्रासः कुत्र कुत्रापि अतिहारि अति मनोहरं भुवनानांत्रयं भुवनत्रयं तस्मिन् भुवनत्रये भुव
नानां स्वर्ग्गमर्त्यपातालानां त्रयं समूहः चित्ते अन्तःकरणे कृपा दया निष्ठुरस्य भावः निष्ठुरता समरेनिष्ठुरतासमरनि ७७

ष्ठुरता निष्ठुरस्य कठोरस्य भावः धर्म्मः समरे संग्रामे २१ त्रैलोक्यमिति हे देवि ! त्वया अखिलं एतत् त्रैलोक्यं रिपुना शनेन त्रातं समरमूर्द्धनि तान् हत्वा ते रिपुगणाः अपि दिवंनीताः उन्मदसुरारिभवं अस्माकं भयं अपि अपास्तं अतः ते नमः त्वया अखिलं समस्तं त्रयोलोकास्तेषांभावस्त्रैलोक्यं रिपूणां नाशनं रिपुनाशनं तेन रिपुनाशनेन रिपूणां शत्रूणां दैत्यानां नाशनं नाशः त्रातं रक्षितं समरस्य मूर्द्धा समरमूर्द्धा तस्मिन् समरमूर्द्धनि समरस्य संग्रामस्य मूर्द्धा प्रधानस्थानं यान् रिपुगणान् रिपूणां गणाः रिपुगणाः रिपूणां शत्रूणां दैत्यानां गणाः समूहाः दिवं स्वर्गं नीताः प्रापिताः सुराणां अ

येपि २१ त्रैलोक्यमेतदखिलंरिपुनाशनेनत्रातंत्वयासमरमूर्द्धनितेपिहत्वा ॥ नीतादिवंरिपुगणाभयमप्यपास्तमस्माकमुन्मदसुरारिभवन्नमस्ते २२ शूलेनपाहिनोदेविपाहिखड्गेनचाम्बिके ॥ घण्टास्वनेननःपाहिचापज्यानिःस्वनेनच २३ प्राच्यांरक्षप्रतीच्यांचचण्डिकेरक्षदक्षिणे ॥

रयः सुरारयः उन्मदाश्चते सुरारयश्च उन्मदसुरारयः उन्मदसुरारिभ्यः भवतीति उन्मदसुरारिभवं सुराणां देवाना अरयः शत्रवः दैत्याः उन्मदाः मदान्धाः भयं त्रासः अपास्तं दूरीकृतं अतः अस्मात् कारणात् ते तुभ्यं नमः नमस्कारोऽस्तु २२ शूलेनेति हे देवि! त्वं नः शूलेनपाहि नःअस्मान् शूलेन त्रिशूलेनपाहि रक्ष किंच हे अम्बिके ! त्वं नःखड्गेन पाहि नः अस्मान् खड्गेन असिना पाहि रक्ष किंच त्वं नः घण्टास्वनेन पाहि नः अस्मान् घण्टायाः स्वनः घण्टास्वनः तेन घण्टास्वनेन स्वनः शब्दः पाहि रक्ष किंच त्वं नः चापज्यानिःस्वनेन पाहि नः अस्मान् चापस्य ज्या चापज्या चापज्यायाःनिःस्व

नः चापज्यानिःस्वनः तेन चापज्यानिःस्वनेन चापस्य धनुषः ज्या प्रत्यञ्चा निःस्वनः टङ्कारः शब्दः २३ प्राच्यामिति हे देवि! त्वं प्राच्यांस्थितान् नःरद्ग प्राच्यां पूर्वस्यां दिशि नःअस्मान् किञ्च हे चण्डिके! त्वं प्रतीच्यां स्थितान् नःरद्ग प्रतीच्यां पश्चिमायां दिशि नः अस्मान् किञ्च त्वं दक्षिणे स्थितान् नः रद्ग दक्षिणे दक्षिणदिग्भागे नः अस्मान् हे ईश्वरि! तथा त्वं उत्तरस्यां स्थितान् नः आत्मशूलस्यभ्रामणेन रद्ग उत्तरस्यां उदीच्यां दिशि नः अस्मान् आत्मनः शूलं आत्मशूलं तस्य आत्मशूलस्य २४ सौम्यानीति हे देवि! ते सौम्यानि यानिरूपाणि किञ्च अत्यर्थघोराणि यानिरूपाणि त्रैलोक्ये विचरन्ति

भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्वरि २४ सौम्यानियानिरूपाणित्रैलोक्येविचरन्तिते ॥ या
निचात्यर्थघोराणितैरद्गास्मांस्तथाभुवम् २५ खड्गशूलगदादीनियानिचास्त्राणितेम्बिके ॥ कर
पल्लवसङ्गीनितैरस्मान्रद्गसर्व्वतः २६ ऋषिरुवाच ॥ एवंस्तुतासुरैर्दिव्यैःकु सुमैर्नन्दनोद्भवैः ॥

तैःत्वं अस्मान् तथा भुवं रक्ष ते तव सौम्यानि सृष्टिस्थितिलयव्यापाराणि यानिरूपाणि स्वरूपाणि अत्यर्थघोराणिसंहारव्यापाराणि यानिरूपाणि स्वरूपाणि त्रयोलोकाःतेषांभावःत्रैलोक्यं तस्मिन् त्रैलोक्ये विचरन्ति गच्छन्ति तैः रूपैः भुवंपृथिवीं २५ खड्गेति हे अम्बिके! किञ्च करपल्लवसंगीनि खड्ग शूलगदादीनि ते यानि अस्त्राणि भवन्ति तैः त्वं अस्मान् सर्व्वतः रद्ग करा एवपल्लवाः करपल्लवाः करपल्लवानांसङ्गः करपल्लवसङ्गः करपल्लवसंगोस्ति येषां तानि करपल्लवसङ्गीनि कराएव अष्टादशभुजा एवपल्लवाः किसलयपत्राणि सङ्गः संसर्गःसम्बन्धःखड्गश्च शूलश्च गदा च ताःखड्गशूलगदाःखड्गशूल

दु०टी० गदाः आदयोयेषां तानि खड्गशूलगदादीनि खड्गः असिः ते तव शूलं त्रिशूलं तैः अस्त्रैः सर्व्वतः सर्व्वत्र २६ ऋषिरुवाच अ०
८० एवमिति हे राजन् ! त्रिदशैः समस्तैः सुरैः तु एवं स्तुता जगतांधात्री प्रसादसुमुखी सती प्रणतान् समस्तान् सुरान् प्राह ४
कथंभूता जगतांधात्री भक्त्या दिव्यैः नन्दनोद्भवैः कुसुमैः तथा गन्धानुलेपनैः अर्चिता पुनः कथंभूता जगतांधात्री दिव्यैः
धूपैः धूपिता तिस्रः दशाः येषां ते त्रिदशाः तैः त्रिदशैः दशाः अवस्थाः समस्तैः सम्पूर्णैः सुरैः देवैः एवं पूर्व्वोक्तप्रकारेण
जगतां चतुर्दशलोकानां धात्री जननी देवी सुष्ठुमुखं यस्याः सा सुमुखी प्रसादेन सुमुखी प्रसादसुमुखी सुष्ठुशोभनं मुखं

अर्चिताजगतांधात्रीतथागन्धानुलेपनैः २७ भक्त्यासमस्तैस्त्रिदशैर्दिव्यैर्धूपैस्तुधूपिता ॥ प्रा
हप्रसादसुमुखीसमस्तान्प्रणतान्सुरान् २८ देव्युवाच ॥ व्रियतांत्रिदशाःसर्व्वेयदस्मत्तोभिवा
ञ्छितम् ॥ देवाऊचुः ॥ भगवत्याकृतंसर्वंनकिञ्चिदवशिष्यये २६ यदयंनिहतःशत्रुरस्माकंमहिषा

आननं प्रसादेन प्रसन्नतया प्रणतान् कृतनमस्कारान् समस्तान् सम्पूर्णान् सुरान् देवान् प्राह उवाच दिविभवानि दि
व्यानि तैः दिव्यैः दिवि स्वर्गे भवानि उत्पन्नानि दिव्यैः उत्कृष्टैः नन्दनात् उद्भवोयेषां तानि नन्दनोद्भवानि तैःनन्दनोद्भवैः
नन्दनात् देववनात् उद्भवः प्रादुर्भावः कुसुमैः पुष्पैः गन्धाश्च अनुलेपनानि च तानि गन्धानुलेपनानि तैः गन्धानुलेपनैः
गन्धारागादयः अनुलेपनानि श्रीचन्दनादीनि अर्चिता पूजिता दिव्यैः मनोज्ञैः २७ । २८ देव्युवाच व्रियतामिति देवा
ऊचुः भगवत्येति हे सर्व्वे त्रिदशाः ! भवन्तः अस्मत् यत् अभिवाञ्छितं भवति तत् भवद्भिः व्रियतां अभिवाञ्छितं इच्छितं ८०

दु०टी० म्रियतां प्रोच्यतां देवाऊचुः हे देवि ! भगवत्या अस्माकं शत्रुः अयं महिषासुरः यत् निहतः तत् सर्व्वं कृतं किञ्चित् अ०
८१ न अवशिष्यते भगवत्या त्वया शत्रुः वैरी निहतः प्रहारितः न अवशिष्यते न अवशिष्टो भवति २९ यदिति ४
हे महेश्वरि ! यदि चापि त्वया अस्माकं वरः देयः तर्हि त्वं संस्मृता सती असंस्मृता सती नः परमापदः हिंसेथाः
यदि चापि यद्येवं सत्यपि अस्माकं अस्मभ्यं नः अस्माकं परमाश्च ताः आपदश्च ताः परमापदः परमा उत्कृष्टाः आप
दः आपत्तयः हिंसेथाः नाशय ३० उत्तरार्द्धमुत्तरान्वयि यइति हे अमलानने ! हे अम्बिके ! यः मर्त्यः त्वां एभिः स्तवैः

सुरः ॥ यदिवापिवरोदेयस्त्वयास्माकंमहेश्वरि ३० संस्मृतासंस्मृतात्वन्नोहिंसेथाःपरमापदः ॥
यश्चमर्त्यस्तवैरेभिस्त्वांस्तोष्यत्यमलानने ३१ तस्यवित्तर्द्धिविभवैर्धनदारादिसम्पदाम् ॥ वृद्ध
येस्मत्प्रसन्नात्वंभवेथाःसर्व्वदाम्बिके ३२ ऋषिरुवाच ॥ इतिप्रसादितादेवैर्जगतोर्थेतथात्मनः॥

स्तोष्यति तस्य त्वं वित्तर्द्धिविभवैः सह धन दारादिसम्पदां किञ्च अस्मत् वृद्धये सर्व्वदा प्रसन्ना भवेथाः अमलं आन
नं यस्याः सा अमलानना तत्सम्बोधने हे अमलानने ! अमलं प्रसन्नं आननं मुखारविन्दं तस्य मर्त्यस्य मानुषस्य वित्त
स्य ऋद्धिः वित्तर्द्धिः वित्तर्द्धेः विभवाः वित्तर्द्धिविभवास्तैः वित्तर्द्धिविभवैः वित्तस्य ज्ञानस्य ऋद्धिः उपचयः विभवा ऐ
श्वर्य्यादयः धनानि च दाराश्च धनदाराः धनदाराः आदिर्येषां ते धनदारादयः धनदारादीनां सम्पदः धनदारादिसम्पदः
तासां धनदारादिसम्पदां धनानि द्रव्याणि दाराः कलत्राणि सम्पदः अनुरूपात्मभावः अस्मत् अस्माकं वृद्धये उपच ८१

याय सर्व्वदा सदा भवेथाः भव ३१ । ३२ ऋषिरुवाच ॥ इतीति हे नृप! हे राजन्! देवैः जगतः तथा आत्मनः अर्थे इति 
प्रसादिता भद्रकाली तथा इति उक्त्वा अन्तर्हिता बभूव नॄन् पातीति नृपः तत्सम्बोधने हे नृप! नॄन् जनान् पाति रक्षति
देवैः इन्द्रादिभिः इति पूर्व्वोक्तप्रकारेण प्रसादिता प्रसन्ना सती भद्रं कालयतीति भद्रकाली भद्रं कल्याणं कालयति
वर्द्धयति तथा तथास्तु अन्तर्हिता अदृश्या ३३ इतीति हे भूप! हे राजन्! पुराजगत्त्रयहितैषिणी सादेवी देवशरीरेभ्यःय
था सम्भूता बभूव तथा मयाते इति एतत् कथितं भुवं पातीति भूपः तत्सम्बोधने हे भूप! भुवं पृथिवीं पाति रक्षति ज

तथेत्युक्त्वाभद्रकालीबभूवान्तर्हितानृप ३३ इत्येतत्कथितंभूपसम्भूतासायथापुरा ॥ देवीदेव
शरीरेभ्योजगत्त्रयहितैषिणी ३४ पुनश्चगौरीदेहासासमुद्भूतायथाभवत् ॥ वधायदुष्टदैत्या
नांतथाशुम्भनिशुम्भयोः ३५ रक्षणायचलोकानांदेवानामुपकारिणी ॥ तच्छृणुष्वमयाख्यातं

गतां त्रयं जगत्त्रयं जगत्त्रयस्याहितैषिणी जगत्त्रयहितैषिणी जगतां स्वर्गमर्त्यपातालानां हितैषिणी हितकर्त्री देवानां
शरीराणि देव शरीराणि तेभ्यः देवशरीरेभ्यः देवानां इन्द्रादीनां शरीराणि देहाः यथा येन प्रकारेण सम्भूता प्रकटीभूता
तथा तेन प्रकारेण ते तुभ्यं ३४ पुनश्चेति हे राजन्! पुनश्च देवानां उपकारिणी गौरी देहा सा दुष्टदैत्यानां तथा शुम्भ नि
शुम्भयोः वधाय किञ्च लोकानां रक्षणाय यथा समुद्भूता अभवत् तथा मयाख्यातं, तत्त्वं शृणुष्व अहं यथावत् ते कथया
मि देवानां इन्द्रादीनां उपकारिणी उपकारकर्त्री गौर्य्याः देहः गौरीदेहः गौरीदेहस्य कारणं यस्याः सा गौरीदेहा गौ ८२

र्व्याः पार्श्ववर्त्याः देहाः शरीरं कारणहेतुः दुष्टाश्च ते दैत्याश्च दुष्टदैत्याः तेषां दुष्टदैत्यानां दुष्टाः कुटिलाः शुम्भश्च निशुम्भ श्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः लोकानां जनानां सा देवी यथा येन प्रकारेण समुद्भूता प्रकटीभूता तथा तेन प्रकारेण मया मत्तः ख्यातं लोकप्रसिद्धं तत् तं प्रकारं यथावत् यथार्थं ते तुभ्यं कथयामि कथयिष्ये वर्त्तमानसामीप्ये वर्त्तमानवद्वा इत्यनेनसूत्रेण भूतेलट् ३५। ३६ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेशक्रादिस्तुतिर्नाम चतुर्थोऽध्यायः ४ ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

यथावत्कथयामिते ३६ इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येशक्रादिकृतदे व्याःस्तुतिर्न्नामचतुर्थोऽध्यायः ४ ॥ ० ॥ ० ॥ ० ॥

ऋषिरुवाच ॥ पुराशुम्भनिशुम्भाभ्यामसुराभ्यांशचीपतेः ॥ त्रैलोक्यंयज्ञभागाश्चहृतामदबला

यथावत्कथयामीति प्रतिज्ञातमितिहासमाह ऋषिरुवाच पुरेति हे राजन्! पुरा असुराभ्यां शुम्भनिशुम्भाभ्यां मदबला श्रयात् शचीपतेः त्रैलोक्यंहृतं किञ्च यज्ञभागाः हृताः पुरापूर्व्वं असुराभ्यां दनुजाभ्यां शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ ताभ्यां शुम्भनिशुम्भाभ्यां मदश्च बलं च ते मदबले मदबलयोः आश्रयः मदबलाश्रयः तस्मात् मदबलाश्रयात् मदः गर्व्वः बलं शक्तिः आश्रयः आधारः शच्याः पतिः शचीपतिः तस्य शचीपतेः शच्याः इन्द्राण्याः पतिः स्वामी इन्द्रः त्रयोलोकाः

दु०टी० त्रैलोक्यं लोकाः स्वर्ग मर्त्य पातालानि हृतं स्वाधीनं कृतं यज्ञे भागाः यज्ञभागाः हृताः स्वाधीनीकृताः १ ताव अ०
८४ वेति हे राजन्! तौ एव सूर्य्यतां तद्वत् ऐन्दवं अधिकारं तथा कौबेरं अधिकारं अथ च याम्यं अधिकारं किञ्च वरुणस्य च अ ५
धिकारं चक्रातेतौ एव शुम्भ निशुम्भौ एव सुवतीति सूर्य्यः सूर्य्यस्यभावः सूर्य्यता तां सूर्य्यतां सुवति कर्म्माणि लोकं प्रेर
यति भावः धर्म्मः सूर्य्यतां सर्व्वलोककर्म्मप्रेरकतां अधिकारं तद्वत् तथैव ऐन्दवं इन्दोः अयं ऐन्दवः तंऐन्दवं इन्दोः
चन्द्रस्य कुबेरस्य अयं कौबेरः तं कौबेरं यमस्य अयं याम्यः तं याम्यं २ ताविति हे राजन्! तौ एव किञ्च पवनर्द्धिं किञ्च

अयात् १ तावेवसूर्य्यतांतद्वदधिकारन्तथैन्दवम् ॥ कौबेरमथयाम्यञ्चचक्रातेवरुणस्यच २
तावेवपवनर्द्धिं च चक्रतुर्वह्निकर्म्म च ॥ ततोदेवाविनिर्द्धूताभ्रष्टराज्याःपराजिताः ३ हृताधिका

वह्निकर्म्म च क्रतुः तौ एव शुम्भनिशुम्भौ एव पवनः ऋद्ध्यते अनेनेतिपवनर्द्धिः तं पवनर्द्धिं पवनः वायुः ऋद्ध्यते वर्द्ध्यते
पवनर्द्धिं पवनाधिकारं वह्नेः कर्म्म वह्निकर्म्म तत् वह्निकर्म्म अग्न्यधिकारं ततः विनिर्द्धूताः देवाः पराजिताः
सन्तः भ्रष्टराज्याः जाताइत्यर्थः ततः तदनन्तरं स्वस्वाधिकारहरणानन्तरं विनिर्द्धूताः कम्पिताः देवाः इन्द्रादयः परैः
आजिताः पराजिताः परैः शत्रुभिः आसर्व्वतः ३ हृतेति हे राजन्! महासुराभ्यां ताभ्यां निराकृताः सर्वे त्रिदशाः हृता
धिकाराः सन्तः अपराजितां तां देवीं संस्मरन्ति महान्तौ च तौ असुरौ च महासुरौ ताभ्यां महासुराभ्यां महान्तौ बलव
न्तौ असुरौ दैत्यौ ताभ्यां शुम्भनिशुम्भाभ्यां निराकृताः स्वर्गात् निः सारिताः सर्वे समस्ताः तिस्रः दशाः येषां ते त्रिदशाः ८४

दु०टी० दशाः अवस्थाः त्रिदशाः देवाः हृतः अधिकारो येषां ते हृताधिकाराः हृतः गतः अधिकारः स्वस्वाधिकारः अपरैः अजि अ०
८५ ता अपराजिता तां अपराजितां अपरैः शत्रुभिः संस्मरन्ति स्मृतवन्तः वर्त्तमानसामीप्ये भूतेलट् ४ तत्र हेतुमाह तये ५
ति तया अस्माकं इति यथावरः दत्तः इतीति किं हे त्रिदशाः भवद्भिः अहं आपत्सु स्मृता सती तत्क्षणात् भवतां अखि
लाः परमापदः नाशयिष्यामि तया देव्या यथा यथार्थः इतीति किं अखिलाः समस्ताः परमाश्चताः आपदश्च परमापदः
ताः परमापदः परमाः उत्कृष्टाः आपदः आपत्तयः ५ इतीति देवाः इति मतिं कृत्वा नगेश्वरं हिमवन्तं जग्मुः ततः तत्र

रास्त्रिदशास्ताभ्यांसर्व्वैनिराकृताः ॥ महासुराभ्यांतांदेवींसंस्मरन्त्यपराजिताम् ४ तयास्माकंवरो
दत्तोयथापत्सुस्मृताखिलाः ॥ भवतांनाशयिष्यामितत्क्षणात्परमापदः ५ इतिकृत्वामतिंदेवा
हिमवन्तंनगेश्वरम् ॥ जग्मुस्तत्रततोदेवींविष्णुमायांप्रतुष्टुवुः ६ देवाऊचुः ॥ नमोदेव्यैमहा

विष्णुमायां देवीं प्रतुष्टुवुः देवाः इन्द्रादयः मतिं बुद्धिं नगानां ईश्वरः नगेश्वरः तं नगेश्वरं नगानां पर्व्वतानां ईश्वरः
स्वामी हिमवन्तं हिमाचलं ततः तदनन्तरं हिमवद्गमनानन्तरं तत्र हिमवति विष्णोः माया विष्णुमाया तां विष्णु
मायां विष्णोः हरेः माया शक्तिः ६ प्रशब्दद्योतितां सर्व्वात्म्येन स्तुतिमाह देवाऊचुः नम इति देव्यै सततं नमः
महादेव्यै सततं नमः शिवायै सततं नमः प्रकृत्यै सततं नमः भद्रायै सततं नमः वयं नियताः सन्तः तां प्रणताः स्म
देव्यै द्युत्यादिमत्यै सततं निरन्तरं नमः नमस्कारोस्तु महादेव्यै ब्रह्मादिदेवसर्गादिव्यवहारप्रवर्त्तनकर्त्र्यै शिवायै ८५

 मुक्तिरूपायै प्रकृत्यै सृष्टिशक्त्यै भद्रायै रक्षणशक्त्यै नियताः समाहितचित्ताः स्मेति पादपूरणे ७ रौद्रायै इति रौद्रायै 
नमः नित्यायै नमः गौर्य्यै नमः धात्र्यै नमः किंच इन्दुरूपिण्यै ज्योत्स्नायै नमः सुखायै नमः सततं नमः सर्व्वत्र
बोध्यं रौद्रायै संहारशक्त्यै नित्यायै कालानवच्छिन्नायै यद्वानित्याख्य शक्तिरूपायै गौर्य्यै गौरवर्णायै धात्र्यै जगदा
धारायै ज्योत्स्नायै चन्द्रकिरणायै सुखायै परमानन्दरूपायै ८ कल्याण्यै इति कल्याण्यै नमः वृद्ध्यै नमः सिद्ध्यै नमः
वयं प्रणताः सन्तः ताभ्यः नमः नमस्कुर्म्मः कल्याण्यै कल्याणकर्त्र्यै वृद्ध्यै उपचयरूपायै सिद्ध्यै अणिमाद्यष्टविधि

देव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् ७ रौद्रायैनमोनित्यायैगौ
र्य्यैधात्र्यैनमोनमः ॥ ज्योत्स्नायैचेन्दुरूपिण्यैसुखायैसततंनमः ८ कल्याण्यैप्रणतांवृद्ध्यैसिद्ध्यै
कुर्म्मोनमोनमः ॥ नैर्ऋत्यैभूभृतांलक्ष्म्यैशर्वाण्यैतेनमोनमः ९ दुर्गायैदुर्गपारायैसारायैसर्व्व

रूपायै प्रणताः नम्राः नैर्ऋत्यै नमः भूभृतां लक्ष्म्यै नमः शर्व्वाण्यै ते नमः नैर्ऋत्यै राक्षस लक्ष्म्यै यद्वा नैर्ऋत्यै रक्षः
शक्त्यै भूभृतां राज्ञां शर्व्वाण्यै शिवशक्त्यै ते तुभ्यं ९ दुर्गायै इति दुर्गायैनमः दुर्गपारायैनमः सारायैनमः सर्व्वकारिण्यै
नमः तथैव ख्यात्यैनमः कृष्णायैनमः धूम्रायै सततंनमः दुर्गायै दुरवज्ञायै दुर्गःपारोयस्याः सा दुर्गपारा तस्यै दुर्गपारा
यै दुर्गः दुराधिगमः पारः परिच्छेदः यद्वा दुर्गात् पारं करोतीति दुर्गपारा तस्यै दुर्गपारायै दुर्गात् संसारात् सारायै बलव
त्यै सर्व्वकारिण्यै सर्व्वजनने स्वतन्त्रायै ख्यात्यै प्रकृतिपुरुष भेद ज्ञान रूपायै यद्वा ख्यात्यै प्रसिद्ध्यै कृष्णायै कृष्ण 

 वर्णायै यद्वा कृष्णशक्त्यै धूम्रायै धूम्रवर्णायै यद्वा धूम्रावत्यै शक्त्यै १० अतीति वयं नताः सन्तः अति सौम्याति रौद्रायै 
तस्यै नमः नमस्कुर्म्मः नताः यद्वा अति सौम्याचासौ अति रौद्राच अति सौम्याति रौद्रा तस्यै अति सौम्यातिरौद्रायै
विद्यात्वेन संसारतापशान्तिकत्वादति सौम्या अविद्या रूपेण संसार हेतुत्वादतिरौद्रा तस्यै देव्यै जगत्प्रतिष्ठायै नमः
देव्यैनमः कृत्यै नमः जगत्प्रतिष्ठायै जगदुपादानकारण रूपायै यद्वा जगदाधारायै देव्यै देवशक्त्यै कृत्यै क्रियायै ११ येति

कारिण्यै ॥ ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः १० अतिसौम्यातिरौद्रायैनतास्तस्यैनमो
नमः ॥ नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ११ यादेवीसर्व्वभूतेषुविष्णुमायेतिशब्दिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः १२ यादेवीसर्व्वभूतेषुचेतनेत्यभिधीयते ॥ नमस्तस्यै
नमस्तस्यैनमस्तस्यैनमोनमः १३ यादेवीसर्व्वभूतेषुबुद्धिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्त

या देवी सर्व्वे भूतेषु विष्णुमाया इति शब्दिता भवति तस्यैनमः तस्यै नमः तस्यै नमः नमः नमः सर्व्वे च ते भूताश्च
सर्व्वभूताः तेषु सर्व्वभूतेषु सर्व्वे समस्ताः भूताः प्राणिनः विष्णोः माया विष्णुमाया विष्णोः हरेः माया मूलविद्या
शब्दिता सर्व्वागमेषु प्रतिपादिता तस्यै देव्यै नमः नमस्कारोस्तु तस्यै देव्यै नमः नमस्कारोस्तु तस्यै देव्यै नमः
नमस्कारोस्तु नमस्कारोस्तु नमस्कारोस्तु १२ येति जनैः या देवी सर्व्वभूतेषु चेतना इति अभिधीयते तस्यैनमः तस्यै
नमः तस्यैनमः नमः नमः चेतना निर्विकल्पकतयाचिच्छक्तिः १३ येति या देवी सर्व्वभूतेषु बुद्धिरूपेण संस्थिता 

भवति तस्यैनमः ३ नमः नमः बुद्धिरूपेण सविकल्पज्ञानरूपेण १४ येति या देवी सर्व्वभूतेषु निद्रारूपेण संस्थिता भवति तस्यै नमः ३ नमः नमः निद्रारूपेण सुषुप्त्यवस्थारूपेण यद्वा स्वप्नावस्थारूपेण १५ येति या देवी सर्व्वभूतेषु क्षुधारूपेण संस्थिता भवति तस्यैनमः ३ नमः नमः क्षुधारूपेण अभिजिहीर्षारूपेण १६ येति या देवी सर्व्व

स्यैनमस्तस्यैनमोनमः १३ यादेवीसर्व्वभूतेषुनिद्रारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यै नमोनमः १५ यादेवीसर्व्वभूतेषुक्षुधारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यै नमोनमः १६ यादेवीसर्व्वभूतेषुच्छायारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमो नमः १७ यादेवीसर्व्वभूतेषुशक्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः १८ यादेवीसर्व्वभूतेषुतृष्णारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः १९ यादेवी

भूतेषु छाया रूपेण संस्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमःनमः छायारूपेण संस्थिता संसारतया भावरूपेण यद्वा वर्णप्रसादरूपेण १७ येति या देवी सर्व्वभूतेषु शक्तिरूपेणसंस्थिता भवति तस्यैनमः ३ नमः नमः शक्तिरूपेण कार्य्य जननादि सामर्थ्य रूपेण १८ येति यादेवी सर्व्वभूतेषु तृष्णारूपेण संस्थिता भवति तस्यैनमः ३ नमःनमः तृष्णारूपेण अनात्मीय स्वीकारेच्छारूपेण १९ येति या देवी सर्व्वभूतेषु क्षान्तिरूपेण संस्थिता भवति तस्यैनमः तस्यै ८८

 नमः तस्यैनमः नमः नमः क्षान्ति रूपेण सामर्थ्ये सत्यपि अपकारिणी अपकाराचिकीर्षारूपेण २० येति या देवीसर्व्व भूतेषु जातिरूपेण संस्थिता भवति तस्यैनमः ३ नमः २ जातिरूपेण गोत्रादिरूपेण २१ येति यादेवी सर्व्वभूतेषु लज्जारूपेण संस्थिता भवति तस्यैनमः ३ नमः २ लज्जारूपेण स्वकार्य्यविषयाऽन्यज्ज्ञानमयरूपेण २२ येति या देवी 

सर्व्वभूतेषुक्षान्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २० यादेवीसर्व्वभूतेषुजातिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २१ यादेवीसर्व्वभूतेषुलज्जारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २२ यादेवीसर्व्वभूतेषुशान्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २३ यादेवीसर्व्वभूतेषुश्रद्धारूपेण संस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २४ यादेवीसर्व्वभूतेषुकान्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २५ यादेवीसर्व्वभूतेषुलक्ष्मीरूपेणसंस्थिता ॥

सर्व्वभूतेषु शान्ति रूपेण संस्थिता भवति तस्यैनमः ३ नमः २ शान्तिरूपेण इन्द्रिय संयम विषयोपरतिरूपेण २३ येति या देवी सर्व्वभूतेषु श्रद्धारूपेण संस्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमः नमः श्रद्धारूपेण श्रुत्या युक्तेर्थे आस्तिकत्व रूपेण २४ येति या देवी सर्व्वभूतेषु कान्तिरूपेण संस्थिता भवति तस्यैनमः ३ नमः नमः कान्तिरू

पेण शोभारूपेण २५ येति या देवी सर्व्वभूतेषु लक्ष्मीरूपेण संस्थिता भवति तस्यैनमः ३ नमः नमः लक्ष्मीरूपेण धनादि सम्पत्तिरूपेण यद्वा मोक्ष प्राप्ति रूपेण २६ येति या देवी सर्व्वभूतेषु वृत्तिरूपेण संस्थिता भवति तस्यैनमः तस्यै नमः तस्यैनमः नमः नमः वृत्तिरूपेण जीविकारूपेण यद्वा प्रवृत्तिरूपेण २७ येति या देवी सर्व्वभूतेषु स्मृतिरूपेण

नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २६ यादेवीसर्व्वभूतेषुवृत्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २७ यादेवीसर्व्वभूतेषुस्मृतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २८ यादेवीसर्व्वभूतेषुदयारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः २९ यादेवीसर्व्वभूतेषुतुष्टिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ३० यादेवीसर्व्वभूतेषुमातृरूपेणसंस्थिता॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ३१

संस्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमः नमः स्मृतिरूपेण अनुभूतविषय ज्ञानरूपेण २८ येति या देवी सर्व्वभूतेषु दयारूपेण संस्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमः नमः दयारूपेण परदुःखप्रहरणेच्छारूपेण २९ येति या देवी सर्व्वभूतेषु तुष्टिरूपेण संस्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमः नमः तुष्टिरूपेण अधिगताधिकाराभिलाषरूपेण ३० येति या देवी सर्व्वभूतेषु मातृरूपेण संस्थिता भवति तस्यैनमः ३ नमः २ मातृरूपेण ६०

दु०टी० पालयित्री रूपेण यद्वा मात्रिकाधिष्ठात्री देवतारूपेण ३१ या देवी सर्व्वभूतेषु भ्रान्तिरूपेण संस्थिता भवति तस्यैनमः अ०
६१ ३ नमः नमः भ्रान्तिरूपेण अतद्वति तद्वत्प्रत्ययरूपेण ३२ इन्द्रियेति या अखिलेषु भूतेषु अन्तर्य्यामिविधौ स्थिता ५
भवति इन्द्रियाणां किंच भूतानां अधिष्ठात्री भवति तस्यै व्याप्तिदेव्यै सततंनमः नमः अखिलेषु समस्तेषु भूतेषु जनेषु इन्द्रियाणां ज्ञानकरणानां भूतानां ज्ञानविषयाणां सूक्ष्मस्थूलानां अधिष्ठात्री प्रवर्त्तिका निवर्त्तिका च व्याप्तिदेव्यै व्याप्ति

यादेवीसर्व्वभूतेषुभ्रान्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ३२ इन्द्रियाणामधिष्ठात्रीभूतानांचाखिलेषुया ॥ भूतेषुसततंतस्यैव्याप्तिदेव्यैनमोनमः ३३ चिति रूपेणयाकृत्स्नमेतद्व्याप्यास्थिता जगत् ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ३४ स्तुतासुरैः पूर्व्वमभीष्टसंश्रयात्तथासुरेन्द्रेणादिनेषुसेविता ॥ करोतुसानःशुभहेतुरीश्वरीशुभानिभद्राण्यभि

युक्तदेव्यै व्याप्तिकार्यै इत्यर्थः ३३ चितिरूपेति या चितिरूपेण कृत्स्नं एतत् जगत् व्याप्य स्थिता भवति तस्यैनमः तस्यैनमः तस्यैनमः नमःनमः चितिः चयनं बुद्धिः तद्रूपेण ३४ नम इत्यनेन नमोन्तमन्त्र स्वरूपत्वमिदमुपलक्षणं सर्व्व मन्त्र स्वरूपत्वस्येति कश्चित् अत्रायंसंग्रहः विष्णुमायाचेतना च बुद्धिर्निद्रेक्षुधातथा । छायाशक्तिश्च तृष्णा च क्षा न्तिर्ज्जातिस्ततःपरम् १ लज्जाशान्तिस्तथाश्राद्धकान्तिर्लक्ष्मीस्ततः परा । वृत्तिस्स्मृतिर्दयाचैव तुष्टिर्माता ततः ६१

 परम् २ भ्रान्तिर्व्याप्तिशिचातिश्चैव त्रयोविंशतिमातृकाः इतोधिकमनार्षंस्यात्तन्त्रेकात्यायने स्फुटम् ३ ॥ ३४ स्तुते 
ति सुरैः पूर्व्वंस्तुता तथा सुरेन्द्रेण अभीष्टसंश्रयात् दिनेषुसेविता शुभहेतुः सा ईश्वरी नः शुभानि भद्राणि करोतु
किंच आपदः अभिहन्तु सुरैः ब्रह्मादिभिः सुराणां इन्द्रः सुरेन्द्रः तेन सुरेन्द्रेण सुराणां देवानां इन्द्रः श्रेष्ठः अभीष्टस्य सं
श्रयः अभीष्टसंश्रयः तस्मात् अभीष्टसंश्रयात् संश्रयः प्राप्तिः दिनेषु प्रतिदिनं सेविता आराधिता शुभस्य हेतुःशुभहेतुः
हेतुः कारणम् ईश्वरी देवी नः अस्माकं शुभानि भद्राणि अतिशयात्ति शुभानि आपदः आपत्तीः अभिहन्तु नाशयतु ३५

हन्तुचापदः ३५ यासांप्रतंचोद्धतदैत्यतापितैरस्माभिरीशाचसुरैर्नमस्यते ॥ याचस्मृतातत्क्षण
मेवहन्तिनःसर्व्वापदोभक्तिविनम्रमूर्त्तिभिः ३६ ऋषिरुवाच ॥ एवंस्तवादियुक्तानांदेवानांतत्रपा

येति उद्धत दैत्यतापितैः सुरैः अस्माभिः सांप्रतं या ईशानमस्यते किंच भक्ति विनम्रमूर्त्तिभिः अस्माभिः याचस्मृतास
ती तत्क्षण एव नः सर्व्वापदः हन्ति उद्धताश्च तेदैत्याश्च उद्धतदैत्याः उद्धतदैत्यैः तापिताः उद्धतदैत्यतापिताः तैःउद्ध
तदैत्यतापितैः उद्धताः मदमन्धाः दैत्याः असुराः तापिताः पीडिताः सुरैः देवैः सांप्रतंवर्त्तमानकाले ईशादेवी भक्त्या वि
नम्रा मूर्त्तयोयेषांते भक्तिविनम्रमूर्त्तयःतैः भक्तिविनम्रमूर्त्तिभिः विनम्राःनम्रीभूताः मूर्त्तयःतनवःयादेवी सर्व्वाश्चताःआपद
श्च सर्व्वापदः ताः सर्व्वापदः सर्व्वाः समस्ताः आपदः आपत्तयः हन्ति नाशयति ३६ ॥ ऋषिरुवाच ॥ एवमिति हे
राजन्! हे नृपनन्दन! तत्र पार्व्वती जाह्नव्याः तोयेस्नातुं एवं स्तवादियुक्तानां देवानां अभ्यायर्यौ तत्र देवसन्निहिते देशे 

दु०टी० जाह्नव्याः गङ्गायाःतोये जलेस्नातुं स्नातुमेव एवं अनेनप्रकारेण स्तवादिभिः युक्ताः स्तवादियुक्ताः तेषां स्तवादियुक्तानां अ०
६३ स्तवादियुक्तानांस्वीयस्तवनयुक्तानां देवानां इन्द्रादीनां अभिसम्मुखम् ३७ सेति हेराजन् ! सासुभ्रूःतान् सुरान् इति अब्र ५
वीत् इतीति किं हेसुराः भवद्भिः अत्रकास्तूयते किंच अस्याः शरीरकोशतः समुद्भूता शिवा अब्रवीत् शोभने भ्रुवौयस्याः सा सुभ्रूः शोभने मनोहरे सुभ्रूः देवी तान् प्रसिद्धान् सुरान् इन्द्रादीन् अत्र अस्मिन् स्थले अस्याः पार्व्वत्याः शरीरः ए

र्व्वती ॥ स्नातुमभ्याययौतोयेजाह्नव्यान्नृपनन्दन ३७ साब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिःस्तूयतेत्रका ॥
शरीरकोशतश्चास्याःसमुद्भूताब्रवीच्छिवा ३८ स्तोत्रंममैतत्क्रियतेशुम्भदैत्यनिराकृतैः ॥ देवैः
समेतैःसमरेनिशुम्भेनपराजितैः ३९ शरीरकोशाद्यत्तस्याःपार्व्वत्यानिस्सृताम्बिका ॥ कौशिकी
तिसमस्तेषुततोलोकेषुगीयते ४० तस्यांविनिर्गतायांतुकृष्णाभूत्सापिपार्व्वती ॥ कालिकेतिस

वकोशः शरीरकोशः शरीरकोशादिति शरीरकोशतः शरीरः एवदेहः एवकोशः गृहंसमुद्भूता सत्यप्रधानांशेन प्रादुर्भूता शिवादेवी ३८ किमब्रवीत्तदाहस्तोत्रमिति समेतैः समरे निशुम्भेनपराजितैः शुम्भदैत्यनिराकृतैः देवैः मम एतत् स्तोत्रं क्रियते समेतैः मिलितैः समरेरणे शुम्भदैत्येन निराकृताः शुम्भदैत्यनिराकृताः तैः शुम्भदैत्यनिराकृतैः निराकृताः स्वर्गात् निस्सारिताः देवैः इन्द्रादिभिः स्तोत्रंस्तुतिः ३९ शरीरेति अम्बिकातस्याः पार्व्वत्याः शरीरकोशात् यत्निस्सृता ततः जनैः समस्तेषु लोकेषु कौशिकी इति गीयते अम्बिकादेवी शरीरः एवकोशः शरीरकोशः तस्मात् शरीरकोशात् ६३

दु०टी० शरीरः एवदेहः एवकोशः गृहंततः तत् कौशिकी कोशाज्जाता कौशिकी गीयते कथ्यते ४० तस्यामिति तस्यांतु विनि अ०
६४ र्गतायां सत्यां सा पार्व्वती अपि कृष्णा अभूत् जनैः हिमाचलकृताश्रया अम्बिका कालिका इति समाख्याता तस्यां ५
अम्बिकायां विनिर्गतायां निस्सृतायां कृष्णा कृष्णवर्णा हिमाचलेकृतः आश्रयोयया सा हिमाचलकृताश्रया आश्रयः
स्थानं समाख्याता कथिता ४१ तत इति ततः शुम्भनिशुम्भयोः भृत्यौचण्डः किंच मुण्डःसुमनोहरं परंरूपं बिभ्राणां
अम्बिकां ददर्श ततः तदनन्तरं हिमाचलकृताश्रयानन्तरं शुम्भश्चनिशुम्भश्चतौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः

माख्याताहिमाचलकृताश्रया ४१ ततोम्बिकांपरंरूपंबिभ्राणांसुमनोहरं ॥ ददर्शचण्डोमुण्डश्च
भृत्यौशुम्भनिशुम्भयोः ४२ ताभ्यांशुम्भायचाख्याताअतीवसुमनोहरा ॥ काप्यास्तेस्त्रीमहा
राजभासयन्तीहिमाचलम् ४३ नैवतादृक्क्वचिद्रूपंदृष्टंकेनचिदुत्तमम् ॥ ज्ञायतांकाप्यसौदेवीगृ

भृत्यौ सेवकौ सुमनोहरं अति रमणीयं परं उत्कृष्टं रूपं स्वरूपं बिभ्राणां धारयन्तीं अम्बिकांदेवीं ४२ ताभ्यामिति किंच
ताभ्यां शुम्भाय इति आख्याता इतीति किं हे महाराज! हिमाचलं भासयन्ती अतीव सुमनोहरा रमणीया कापि स्त्री
आस्ते ताभ्यां चण्डमुण्डाभ्यां आख्याता कथिता भासयन्ती प्रकाशयन्ती अतीवअत्यन्तमेव सुमनोहरा रमणीया कापि
अनिर्वाच्या ४३ नैवेति हे असुरेश्वर ! केनचित् क्वचित् उत्तमं तादृक् रूपं नैवदृष्टं अतः त्वया असौदेवी अपि का भवति
इति ज्ञायतां किंच गृह्यतां असुराणां ईश्वरः असुरेश्वरः तत्सम्बोधने हे असुरेश्वर! असुराणां दैत्यानां ईश्वरः स्वामी ६४

 उत्तमं श्रेष्ठंरूपं स्वरूपं अतः अस्मात् कारणात् ज्ञायतां मनुष्यद्वारा तत्स्वरूपं विचार्य्यतां गृह्यतां अङ्गीक्रियताम् ४४ 
ननु किमर्थं अङ्गीकारस्तस्या इत्यत आह स्त्री रत्नमिति हे असुरेश्वर ! तत्र अतिचार्वङ्गी त्विषादिशः द्योतयन्ती सा स्त्री रत्नंतु तिष्ठति हे दैत्येन्द्र ! भवान् तांद्रष्टुं अर्हति तत्र तस्मिन् हिमाद्रौ अतिचारु अङ्गंयस्याः सा अतिचार्वङ्गी अतिचारु अतिमनोहरं अङ्गं शरीरं त्विषा दीप्त्या द्योतयन्ती प्रकाशयन्ती स्त्रीरत्नं उत्तम स्त्रीत्यर्थः दैत्यानां इन्द्रः दैत्येन्द्रः तत्स म्बोधने हे दैत्येन्द्र! इन्द्रः स्वामी तां स्त्रियं अर्हति योग्यो भवति ४५ ननु यदि सा रत्नभूता कथमस्माकंस्यादतआहयानीति

ह्यतांचासुरेश्वर ४४ स्त्रीरत्नमतिचार्वङ्गीद्योतयन्तीदिशस्त्विषा ॥ सातुतिष्ठतिदैत्येन्द्रतांभवान्द्र ष्टुमर्हति ४५ यानिरत्नानिमणयोगजाश्वादीनिवैप्रभो ॥ त्रैलोक्येतुसमस्तानिसांप्रतंभान्तिते गृहे ४६ ऐरावतःसमानीतोगजरत्नंपुरन्दरात् ॥ पारिजाततरुश्चायंतथैवोच्चैःश्रवाहयः ४७ वि

हे प्रभो ! त्रैलोक्ये तु मणयः गजाश्वादीनि यानिरत्नानि भवन्ति समस्तानि तानिसांप्रतंते गृहे भान्ति वै त्रयोलोकास्तेषांभा वः त्रैलोक्यं तस्मिन् त्रैलोक्ये गजश्च अश्वश्च गजाश्वौ गजाश्वौ आदीयेषां तानि गजाश्वादीनि गजः हस्तीरत्नानि स्वजातिश्रेष्ठानि समस्तानि सम्पूर्णानि तानि रत्नानि सांप्रतं वर्त्तमानकाले ते तवगृहे भवने भान्ति शोभन्तेवै इति निश्च येन अत इयमपि तव भविष्यत्येवेति भावः ४६ तदेव विवृणोति ऐरावत इति हे प्रभो ! त्वया पुरन्दरात् ऐरावतः गजर त्नं समानीतः किञ्च अयं पारिजाततरुः तथैवउच्चैःश्रवाः हयः समानीतः पुरन्दरात् इन्द्रात् गजरत्नं गजश्रेष्ठः समानी 

दु०टी० तः हृतः पारिजातश्चासौ तरुश्च पारिजाततरुः तरुः वृक्षः हयः अश्वः समानीतः हृतः ४७ विमानमिति वेधसः अ अ०
९६ द्भुतं हंससंयुक्तं यत् एतत् विमानं रत्नभूतं आसीत् तत् विमानंते इह अङ्गणे आनीतं सतु तिष्ठति वेधसः ब्रह्मणः अ ५
द्भुतं आश्चर्य्यकारकं हंसैः संयुक्तं हंससंयुक्तं ते तव इह अस्मिन ४८ निधिरिति हे प्रभो ! त्वया धनेश्वरात् महापद्मः एषः
निधिः समानीतः किञ्च अब्धिः अम्लानपङ्कजां किञ्जल्किनीं मालां तुभ्यं ददौ धनेश्वरात् कुबेरात् महापद्मः महापद्म

मानंहंससंयुक्तमेतत्तिष्ठतितेङ्गणे ॥ रत्नभूतमिहानीतंयदासीद्वेधसोद्भुतम् ४८ निधिरेषमहा
पद्मःसमानीतोधनेश्वरात् ॥ किञ्जल्किनींददौचाब्धिर्मालामम्लानपङ्कजाम् ४९ छत्रंतेवारुणं
गेहेकाञ्चनस्रावितिष्ठति ॥ तथायंस्यन्दनवरोयःपुरासीत्प्रजापतेः ५० मृत्योरुत्क्रान्तिदानाम
शक्तिरीशत्वयाहृता ॥ पाशःसलिलराजस्यभ्रातुस्तवपरिग्रहे ५१ निशुम्भस्याब्धिजाताश्च

नामा अब्धिः क्षीरसमुद्रः अम्लानानि पङ्कजानि यस्यां सा अम्लानपङ्कजा ताम् अम्लानपङ्कजाम् अम्लानानि अम
लिनानि पङ्कजानि कमलानि किञ्जल्किनी तन्नामिका ४९ छत्रमिति हे प्रभो ! काञ्चनस्रावि वारुणं छत्रं ते गेहे तिष्ठति
तथा अयं स्यन्दनवरः तिष्ठति अयं कः यः पुरा प्रजापतेः आसीत् काञ्चनं स्रवतीति काञ्चनस्रावि काञ्चनं सुवर्णं स्रवति
वर्षति वरुणस्य इदं वारुणं ते तव गेहे गृहे स्यन्दनवरः रथश्रेष्ठः पुरापूर्वं प्रजापतेः दक्षस्य ५० मृत्योरिति हे प्रभो ! हे ईश !
त्वयामृत्योः उत्क्रान्तिदानाम शक्तिः हृता सलिलराजस्यपाशः तव भ्रातुः परिग्रहे तिष्ठति मृत्योः यमस्य उत्क्रान्तिं ९६

ददातीति उत्क्रान्तिदा उत्क्रान्तिं मरणं सलिलानां राजा सलिलराजः तस्य सलिलराजस्य सलिलानां जलानां सलि
लराजस्य वरुणस्य भ्रातुःनिशुम्भस्य परिगृह्यते अनेनेतिपरिग्रहः तस्मिन् परिग्रहे हस्ते ५१ निशुम्भस्येति हे ईश ! किंच
अब्धिजाताः समस्ताः रत्नजातयः निशुम्भस्य परिग्रहे तिष्ठन्ति किंच वह्निःअपि अग्निशौचे वाससी तुभ्यं ददौ अब्धेःजाताः
अब्धिजाताः अब्धेः क्षीरसमुद्रात् जाताःप्रकटाः समस्ताः सम्पूर्णाः रत्नजातयः रत्नश्रेष्ठाः परिग्रहे हस्ते वह्निःअग्निःअग्नि
रेवशौचं ययोस्ते अग्निशौचे शौचं नैर्मल्यकारणं वाससी वस्त्रे ५२ एवमिति हे दैत्येन्द्र ! ते एवं समस्तानि रत्नानि आहृ

समस्तारत्नजातयः ॥ वह्निरपिददौतुभ्यमग्निशौचेचवाससी ५२ एवंदैत्येन्द्ररत्नानिसमस्तान्या
हृतानिते ॥ स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते ५३ ऋषिरुवाच ॥ निशम्येतिवचःशुम्भः
सतदाचण्डमुण्डयोः ॥ प्रेषयामाससुग्रीवंदूतंदेव्यामहासुरम् ५४ इतिचेतिचवक्तव्यासागत्वावच

तानि त्वया कल्याणी एषा स्त्रीरत्नं कस्मात् न गृह्यते ते त्वया एवं अनेन प्रकारेण समस्तानि सम्पूर्णानि कल्याणी
कल्याणकारिणी ५३ ॥ ऋषिरुवाच ॥ निशम्येति हे राजन् ! चण्डमुण्डयोः इति वचः निशम्य तदा महासुरः सः शुम्भः
सुग्रीवं दूतं देव्याः प्रेषयामास चण्डश्च मुण्डश्च तौ चण्डमुण्डौ तयोः चण्डमुण्डयोः वचः वाक्यं निशम्य श्रुत्वा तदा
तस्मिन् काले महांश्चासौ असुरश्च महासुरः असुरः दैत्यः सः प्रसिद्धः सुग्रीवं सुग्रीवनामकं देव्याः समीपे ५४ इति
चेति हे सुग्रीव ! त्वया गत्वा मम वचनात् इति च इति च सा वक्तव्या यथा च सा संप्रीत्या अभ्येति तथा त्वया लघु

कार्य्यं वचनात् वाक्यात् इदं चेदं चेत्यर्थः सा देवी अभ्येति प्राप्नोति लघु शीघ्रं कार्य्यं कर्त्तव्यम् ५५ सइति सः ततः अति शोभने यत्र शैलोद्देशे सा देवी आस्ते तत्र गत्वा तां मधुरया गिरा श्लक्ष्णं यथास्यात्तथा प्राह सः दूतः ततः शुम्भ सकाशात् अतिशोभने अतिमनोहरे यत्र यस्मिन् शैलोद्देशे पर्व्वतप्रान्ते आस्ते तिष्ठति तत्र तस्मिन् शैलोद्देशे तां देवीं मधुरया कोमलया गिरा वाण्या श्लक्ष्णं अनुत्कण्ठं प्राहउवाच ५६ ॥ दूतउवाच ॥ देवीति हे देवि ! दैत्येश्वरः त्रैलोक्यपर मेश्वरः शुम्भः भवति तेन त्वत्सकाशं प्रेषितः दूतः अहं इह आगतः दैत्यानां ईश्वरः दैत्येश्वरः ईश्वरः स्वामी त्रयोलोका

नान्मम ॥ यथाचाभ्येतिसंप्रीत्यातथाकार्य्यंत्वयालघु ५५ सतत्रगत्वायत्रास्तेशैलोद्देशेतिशो भने ॥ सादेवींतांततःप्राहश्लक्ष्णंमधुरयागिरा ५६ दूतउवाच ॥ देविदैत्येश्वरःशुम्भस्त्रैलोक्य परमेश्वरः ॥ दूतोहंप्रेषितस्तेनत्वत्सकाशमिहागतः ५७ अव्याहताज्ञःसर्व्वासुयःसदादेवयोनि

स्तेषांभावः त्रैलोक्यं त्रैलोक्यस्य परमेश्वरः त्रैलोक्यपरमेश्वरः तेन शुम्भेन त्वत्सकाशं त्वत्समीपं इह अस्मिन् हिमाद्रौ आगतः प्राप्तः ५७ तदेवोत्पादयति अव्याहतेति हे देवि ! निर्जिताखिलदैत्यारिः सर्व्वासु देवयोनिषु यः सदा अव्याहताज्ञः भवति सः यत् आह तत् त्वं शृणुष्व दैत्यानां अरयः दैत्यारयः अखिलाश्च ते दैत्यारयश्च अखिलदैत्यारयः निर्जिताः अखिलदैत्यारयो येन सः निर्जिताखिलदैत्यारिः अरयः शत्रवः देवाः अखिलाः समस्ताः सर्व्वासु समस्तासु देवयोनिषु विद्याधरादिषु यः शुम्भः सदा सर्व्वदा न व्याहता आज्ञा यस्यसः अव्याहताज्ञः अव्याहता अप्रतिहता सः शुम्भः यत् वाक्यं

दु०टी० आह उवाच तत् वाक्यम् ५८ तदुक्तिमाह ममेति हे देवि ! अखिलं त्रैलोक्यं मम वश्यं भवति देवाः मम वशानुगाः भवन्ति अ०
६६ अहं सर्वान् यज्ञभागान् पृथक्पृथक् उपाश्नामि अखिलं समस्तं त्रयोलोकास्तेषांभावस्त्रैलोक्यं देवाः इन्द्रादयः वशाः अत ५
एव अनुगाः वशानुगाः अनुगाः भृत्याः सर्वान् समस्तान् यज्ञे भागाः यज्ञभागाः तान् यज्ञभागान् पृथक् पृथक् इन्द्राद्यधि
कारभेदेन उपाश्नामि गृह्णामि ५६ त्रैलोक्य इति हे देवि ! त्रैलोक्ये अशेषतः वररत्नानि मम वश्यानि भवन्ति हत्वे
त्याद्युत्तरान्वयि मया तथैव गजरत्नानि देवेन्द्रवाहनं हत्वा त्रयो लोकास्तेषांभावस्त्रैलोक्यं तस्मिन् त्रैलोक्ये अशेषतः

षु ॥ निर्जिताखिलदैत्यारिःसयदाहशृणुष्वतत् ५८ ममत्रैलोक्यमखिलं ममदेवावशानुगाः ॥
यज्ञभागानहंसर्व्वानुपाश्नामिपृथक्पृथक् ५६ त्रैलोक्येवररत्नानिममवश्यान्यशेषतः॥तथैवगज
रत्नानिहत्वादेवेन्द्रवाहनम् ६० क्षीरोदमथनोद्भूतमश्वरत्नंममामरैः ॥ उच्चैश्श्रवससंज्ञंतत्प्रणिपत्य

अशेषाणि सकलानि वररत्नानि रत्नश्रेष्ठानि वश्यानि वशीभूतानि गजरत्नानि गजश्रेष्ठं देवानां इन्द्रः देवेन्द्रः देवेन्द्रस्य
वाहनं देवेन्द्रवाहनं इन्द्रः श्रेष्ठः देवेन्द्रवाहनं ऐरावतः हत्वा हृतः 'अर्थवशात्विभक्तेर्विपरिणामः' ६० क्षीरोदेति हे
देवि ! अमरैः प्रणिपत्य उच्चैश्श्रवससंज्ञं तत् अश्वरत्नं मम समर्पितं कथंभूतं अश्वरत्नं क्षीरोदमथनोद्भूतं अमरैः देवैः
प्रणिपत्य नमस्कृत्य उच्चैश्श्रवस इति संज्ञा यस्य तत् उच्चैश्श्रवससंज्ञं उच्चैः श्रवसे 'इत्यत्र पृषोदरादित्वादगागमः'
स्थितः समर्पितं दत्तं क्षीरोदस्यमथनं क्षीरोदमथनं क्षीरोदमथनात् उद्भूतं क्षीरोदमथनोद्भूतं क्षीरोदस्यक्षीरसमुद्र ६६

 स्य मथनं विलोडनं उद्भूतं प्रादुर्भूतम् ६१ यानिचेति हे शोभने ! देवेषु किञ्च गन्धर्वेषु किञ्च उरगेषु अन्यानि यानि रत्न 
 भूतानि भूतानि भवन्ति तानि मयि एव तिष्ठन्ति हे शोभने ! हे मनोहरे ! देवेषु इन्द्रादिषु उरगेषु सर्व्वेषु रत्नभूतानि भू 
तानि रत्नरूपाणि तानि रत्नानिमयि एव मद्गृहे एव तिष्ठन्ति स्थितानीत्यर्थः ६२ स्त्रीति हे देवि ! लोके वयं त्वां स्त्री
रत्नभूतां मन्यामहे अतः सा त्वं अस्मान् उपागच्छ अतः कुतः यतः वयं रत्नभुजः भवामः स्त्रीरत्नं भवतीति स्त्रीरत्न
भूता ताम् स्त्रीरत्नभूतां मन्यामहे जानीमः अतः अस्मात् कारणात् उपागच्छ आप्नुहि रत्नं भुञ्जन्तीति रत्नभुजः 'वयमि

समर्पितम् ६१ यानिचान्यानिदेवेषुगंधर्व्वेषूरगेषुच ॥ रत्नभूतानिभूतानितानिमय्येवशोभने ६२
स्त्रीरत्नभूतांत्वांदेविलोकेमन्यामहेवयम् ॥ सात्वमस्मानुपागच्छयतोरत्नभुजोवयम् ६३ मांवाम
मानुजंवापिनिशुम्भमुरुविक्रमम् ॥ भजत्वंचञ्चलापाङ्गिरत्नभूतासिवैयतः ६४ परमैश्वर्य्यमतु

त्यात्मगौरवार्थं बहुवचनम् ' ६३ मांवेति हे चञ्चलापाङ्गि ! त्वं मां वा मम अनुजं उरुविक्रमं निशुम्भंवापि भज कुतः यतः
त्वं रत्नभूता वै असि चञ्चलौ अपाङ्गौ यस्याःसा चञ्चलापाङ्गी तत्सम्बोधने हे चञ्चलापाङ्गि ! अपाङ्गौ नेत्रान्ते अनुजं कनि
ष्ठं भ्रातरं उरुः विक्रमो यस्य सः उरुविक्रमः तं उरुविक्रमं उरुः महान् विक्रमः पराक्रमः यतः यस्मात् कारणात् वै
इति निश्चयेन ६४ परमेति हे देवि ! त्वं अतुलं परमैश्वर्य्यं मत्परिग्रहात् प्राप्स्यसे एतत् बुद्ध्या समालोच्य मत्परिग्रहतां
व्रज अतुलं महत् परमं च तत् ऐश्वर्य्यं च परमैश्वर्य्यं परमं उत्कृष्टं मत्परिग्रहात् मदाश्रयात् समालोच्य विचार्य्य म 

त्परिग्रहतां मत्पत्नीत्वं व्रज प्राप्नुहि ६५ ॥ ऋषिरुवाच ॥ इतीति हे राजन्! इति उक्ता सा देवी तदा अन्तः स्मिता
सती जगौ साकायया इदं जगत् धार्य्यते कथंभूता देवी गम्भीरा पुनः कथंभूता देवी दुर्गा पुनः कथंभूता देवी भगवती
पुनः कथंभूता देवी भद्रा इति अनेन प्रकारेण उक्ता कथिता तदा तस्मिन् काले अन्तः स्मितं यस्याः सा अन्तःस्मिता
अन्तः अन्तःकरणे स्मितं ईषद्धास्यं जगौ उवाच यया देव्या गम्भीरा निश्चला दुर्गा दुर्ज्ञेया भगमस्ति यस्याः सा भगव

त्वंप्राप्स्यसेमत्परिग्रहात्॥ एतद्बुद्ध्यासमालोच्यमत्परिग्रहतांव्रज ६५ ॥ ऋषिरुवाच ॥ इत्युक्ता
सातदादेवीगम्भीरान्तस्स्मिताजगौ॥ दुर्गाभगवतीभद्रायायेदंधार्य्यतेजगत् ६६ ॥ देव्युवाच ॥
सत्यमुक्तंत्वयानात्रमिथ्याकिंचित्त्वयोदितम्॥ त्रैलोक्याधिपतिःशुम्भोनिशुम्भश्चापितादृशः ६७
किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथम् ॥ श्रूयतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ६८ यो

ती भगं षडैश्वर्य्यं भद्रमस्ति यस्याः सा भद्रा भद्रं कल्याणम् ६६ ॥ देव्युवाच॥ सत्यमिति हे दूत! त्वया अत्र सत्यं उक्तं
त्वया उदितं किंचित् मिथ्या न भवति शुम्भः किंच तादृशः निशुम्भः अपि त्रैलोक्याधिपतिः भवति अत्र शुम्भविषये सत्यं
यथार्थं उक्तं कथितं त्रयोलोकास्तेषांभावः त्रैलोक्यं त्रैलोक्यस्य अधिपतिः त्रैलोक्याधिपतिः अधिपतिः स्वामी ६७
किंत्विति हे दूत! किंतु अत्र मया यत्प्रतिज्ञातं तत् मिथ्या कथं क्रियते मया पुरा अल्पबुद्धित्वात् या प्रतिज्ञा कृता सा
त्वया श्रूयताम् अत्र परिग्रहत्वविषये यत्प्रातिज्ञातं पुरा पूर्वं अल्पा बुद्धिर्यस्याः सा अल्पबुद्धिः अल्पबुद्धेः भावः अल्प

बुद्धित्वं तस्मात् अल्पबुद्धित्वात् अल्पा स्वल्पा भावः धर्म्मः सा प्रतिज्ञा ६८ प्रतिज्ञातमाह योमामिति हे दूत !
संग्रामे यः मां जयति यः मे दर्प्पं व्यपोहति यः लोके मे प्रतिबलः भवति सः मे भर्त्ता भविष्यति मे मम दर्प्पं बलत्वाभिमानं व्यपोहति दूरी करोति मे मम प्रतिबलः समानबलः मे मम भर्त्ता स्वामी ६९ तदिति हे दूत ! तत् अत्र शुम्भः वा महासुरः निशुम्भः आगच्छतु मांजित्वा लघु मे पाणिं गृह्णातु अत्र चिरेण किं भवति तत् तस्मात्

मांजयतिसंग्रामेयोमेदर्प्पंव्यपोहति ॥ योमेप्रतिबलोलोकेसमेभर्त्ताभविष्यति ६९ तदागच्छतु शुम्भोत्रनिशुम्भोवामहासुरः ॥ मांजित्वाकिंचिरेणात्रपाणिंगृह्णातुमेलघु ७० ॥ दूतउवाच ॥ अवलिप्तासिमैवन्त्वंदेविब्रूहिममाग्रतः ॥ त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुम्भनिशुम्भयोः ७१ अन्येषामपिदैत्यानांसर्व्वेदेवानवैयुधि ॥ तिष्ठन्तिसम्मुखेदेविकिंपुनःस्त्रीत्वमेकिका ७२ इन्द्राद्याःस

कारणात् अत्र अस्मिन् स्थले वा अथवा महांश्चासौ असुरश्च महासुरः असुरः दैत्यः लघु शीघ्रं मे मम पाणिं हस्तं अत्र अस्मिन् विषये चिरेण बहुकालेन किं किं प्रयोजनं पाणिग्रहणात्पूर्वं मम गमनं नोचितमितिभावः ७० ॥ दूतउवाच ॥ अवलिप्तेति हे देवि ! त्वं अवलिप्ता असि मम अग्रतः एवं मा ब्रूहि त्रैलोक्ये कःपुमान् शुम्भनिशुम्भयोः अग्रे तिष्ठेत् अवलिप्ता गर्व्विता एवं अनेन प्रकारेण मा ब्रूहि कथय त्रयोलोकास्तेषां भावस्त्रैलोक्यं तस्मिन् त्रैलोक्ये शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः ७१ नन्वहं देवीत्यतः स्थास्यामीत्यत आह अन्येषामपीति हे देवि ! युधि

सर्व्वे देवाःअन्येषां अपिदैत्यानां सन्मुखे न तिष्ठंति एकिका स्त्रीत्वं तिष्ठेत् किंपुनः वै युधि संग्रामे सर्व्वे समस्ताः एकि 
का एकाकिनी किं पुनः किं वक्तव्या वै इति निश्चयेन ७२ इन्द्राद्या इति हे देवि ! इन्द्राद्याः सकलाः देवाः येषां संयुगे न 
तस्थुः शुम्भादीनां तेषां सन्मुखं स्त्री कथं प्रयास्यसि इन्द्रः आद्योयेषांते इन्द्राद्याः सकलाः समस्ताः येषां दैत्यानां संयुगे संग्रामे शुम्भः आदिर्येषांते शुम्भादयः तेषां शुम्भादीनां तेषां दैत्यानां प्रयास्यसि तिष्ठसि गमिष्यसि ७३ उपसंहरतिसा त्वमिति हे देवि ! मया एवं उक्ता सात्वं शुम्भनिशुम्भयोः पार्श्वं गच्छ विपक्षे बाधकमाह त्वं केशाकर्षणनिर्द्धूतगौरवा

कलादेवास्तस्थुर्य्येषांनसंयुगे ॥ शुम्भादीनांकथंतेषांस्त्रीप्रयास्यसिसन्मुखम् ७३ सात्वंगच्छमयै वोक्तापार्श्वंशुम्भनिशुम्भयोः ॥ केशाकर्षणनिर्द्धूतगौरवामागमिष्यसि ७४ ॥ देव्युवाच ॥ एव मेतद्बलीशुम्भोनिशुम्भश्चातिवीर्य्यवान् ॥ किंकरोमिप्रतिज्ञामेयदनालोचितापुरा ७५ सत्वं

सती मागमिष्यसि उक्ता कथिता शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः पार्श्वं पार्श्वभागं केशानां आकर्षणं केशाकर्षणं केशाकर्षणेन निर्द्धूतं गौरवं यस्याःसा केशाकर्षणनिर्द्धूतगौरवा निर्द्धूतं खण्डितं गौरवं गुरुत्वम् ७४ ॥ देव्युवाच ॥ एवमेतदिति हे दूत ! शुम्भः किंच अतिवीर्य्यवान् निशुम्भः एवं एतद्बली भवति अहं किं करोमि यत् मे पुरा अनालोचिता प्रतिज्ञा कृता अतिवीर्य्यं विद्यते यस्यसः अतिवीर्य्यवान् एवं अनेन प्रकारेण एतद्ब लमस्यास्तीति एतद्बली यत् यस्मात् कारणात् मे मया पुरापूर्व्वं अनालोचिता अविचारिता ७५ सत्वमिति हे दूत ! सः

दु०टी० त्वं गच्छ मयाते यत् एतत् उक्तं तत् सर्व्वं आदृतः सन् असुरेन्द्राय आचक्ष्व किंच यत् युक्तं भवति सः तत्करोतु तेतुभ्यं अ०
१०४ उक्तं कथितं आदृतःसन् आदरवान् सन् असुराणां इन्द्रः असुरेन्द्रः तस्मै असुरेन्द्राय असुराणां दैत्यानां इन्द्रः श्रेष्ठः आ ५
चक्ष्व कथय युक्तं योग्यम् ७६ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेदेव्यादूतसंवादोनामपञ्चमोध्यायः ५॥
ऋषिरुवाच ॥ इतीति हे राजन् ! देव्याः इति वचः आकर्ण्य अमर्षपूरितः सः दूतः समागम्य दैत्यराजाय विस्तरात् स

गच्छमयोक्तंतेयदेतत्सर्व्वमादृतः ॥ तदाचक्ष्वासुरेन्द्रायसचयुक्तंकरोतुयत् ७६ ॥ इतिश्रीमार्क्क
ण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येदेव्यादूतसंवादोनामपञ्चमोध्यायः ५ ॥ ० ॥
ऋषिरुवाच ॥ इत्याकर्ण्यवचोदेव्याःसदूतोमर्षपूरितः ॥ समाचष्टसमागम्यदैत्यराजायविस्तरा
त् १ तस्यदूतस्यतद्वाक्यमाकर्ण्यासुरराट्ततः ॥ सक्रोधःप्राहदैत्यानामाधिपंधूम्रलोचनम् २

माचष्ट वचः वाक्यं आकर्ण्य श्रुत्वा अमर्षेण पूरितः अमर्षपूरितः अमर्षेण क्रोधेन पूरितः व्याप्तः समागम्य शुम्भसमीपं
गत्वा दैत्यानां राजा दैत्यराजः तस्मै दैत्यराजाय विस्तरात् विस्तारात् समाचष्ट उक्तवान् १ तस्येति तस्य दूतस्य तत्
वाक्यं आकर्ण्य ततः सक्रोधः असुरराट् दैत्यानां अधिपं धूम्रलोचनम् प्राह तत् पूर्व्वोक्तं आकर्ण्य श्रुत्वा ततः तदनन्तरं
दूतवाक्यश्रवणानन्तरं क्रोधेनसहवर्त्तमानः सक्रोधः सहवर्त्तमानः युक्तः असुराणांराट् असुरराट् असुराणां दैत्यानांराट्
राजा शुम्भः अधिपं सेनापतिं प्राह उवाच २ हे इति हेधूम्रलोचन ! त्वं स्वसैन्यपरिवारितः सन् आशु केशाकर्षणविह्व १०४

लां दुष्टां तां बलात् आनय स्वस्य सैन्यं स्वसैन्यं स्वसैन्येन परिवारितः स्वसैन्यपरिवारितः परिवारितः युक्तः केशानां अ० ६
आकर्षणं केशाकर्षणं केशाकर्षणेन विह्वला केशाकर्षणविह्वला तां केशाकर्षणविह्वलां विह्वलां आकुलां दुष्टां दुर्व्व
चनां तां देवीं छलात् बलात्कारात् आनय प्रापय ३ तदिति हे धूम्रलोचन! तत्परित्राणदः कश्चित् अपरः यदि वा उत्ति
ष्ठते तर्हि त्वया अमरः वा यक्षः अपि वा गन्धर्व्वः एव सः हन्तव्यः तस्याः परित्राणं तत्परित्राणं तत्परित्राणं ददातीति

हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः ॥ तामानयबलाद्दुष्टांकेशाकर्षणविह्वलाम् ३ तत्परित्रा
णदःकश्चिद्यदिवोत्तिष्ठतेपरः ॥ सहन्तव्योमरोवापियक्षोगन्धर्व्वएववा ४ ऋषिरुवाच ॥ तेना
ज्ञप्तस्ततःशीघ्रंसदैत्योधूम्रलोचनः ॥ वृतःषष्ट्यासहस्राणामसुराणांद्रुतंययौ ५ सदृष्ट्वातांततो
देवींतुहिनाचलसंस्थिताम् ॥ जगादोच्चैःप्रयाहीतिमूलंशुम्भनिशुम्भयोः ६ नचेत्प्रीत्याद्यभवती

तत्परित्राणदः तस्याः देव्याः परित्राणं रक्षणं अपरः अन्यः अमरः देवः ४ ॥ ऋषिरुवाच ॥ तेनेति हे राजन्! शीघ्रं तेन आज्ञप्तः धूम्रलोचनः सः दैत्यः सहस्राणां असुराणां षष्ट्यावृतः सन् ततः द्रुतं ययौ तेन शुम्भेन आज्ञप्तः आज्ञाकृतः असुराणां दैत्यानां वृतः युक्तः ततः तदनन्तरं शुम्भाज्ञाग्रहणानन्तरं द्रुतं शीघ्रं ययौ जगाम ५ स इति हे राजन्! ततः सः तुहिनाचलसंस्थितां तां देवीं दृष्ट्वा उच्चैः इति जगाद इतीति किं हे देवि! त्वं शुम्भनिशुम्भयोः मूलं प्रयाहि ततः त
दनन्तरं गमनानन्तरं सः दूतः तुहिनाचले संस्थिता तुहिनाचलसंस्थिता तां तुहिनाचलसंस्थितां तुहिनाचले हिमा १०५

चले तां प्रसिद्धां उच्चैः उच्चस्वरेण जगाद उवाच शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः मू
लं समीपं प्रयाहि गच्छ विपक्षे बाधकमाह ६ नचेदिति हे देवि! भवती अद्य प्रीत्या मद्भर्त्तारं न उपैष्यति चेत् ततः
एषः अहं केशाकर्षणविह्वलां त्वां बलात् नयामि अद्य इदानीं ममभर्त्ता मद्भर्त्ता तं मद्भर्त्तारं भर्त्तारं स्वामिनं शुम्भश्चेत्
यदि ततः तर्हि एषः विद्यमानः बलात् बलात्कारात् ७ ॥ देव्युवाच ॥ दैत्येश्वरेणेति हे दूत! दैत्येश्वरेण प्रहितः बलवान्
बलसंवृतः त्वं एवं मां बलात् नयसि ततः अहं ते किङ्करोमि दैत्यानां ईश्वरः दैत्येश्वरः तेन दैत्येश्वरेण शुम्भेन प्रहितः

मद्भर्त्तारमुपैष्यति ॥ ततोबलान्नयाम्येषकेशाकर्षणविह्वलाम् ७ ॥ देव्युवाच ॥ दैत्येश्वरेणप्रहितो
बलवान्बलसंवृतः ॥ बलान्नयसिमामेवंततःकिन्तेकरोम्यहम् ८ ॥ ऋषिरुवाच ॥ इत्युक्तःसोभ्य
धावत्तामसुरोधूम्रलोचनः ॥ हुङ्कारेणैवतंभस्मसाचकाराम्बिकाततः ९ अथक्रुद्धंमहासैन्यमसुरा

प्रेषितः बलं विद्यते यस्य सः बलवान् बलेन संवृतः बलसंवृतः बलेन सैन्येन संवृतः युक्तः एवं यदि बलात् बलात्का
रात् नयसि प्रापयसि ततः तर्हि ते तव ८ ॥ ऋषिरुवाच ॥ इतीति हे राजन्! इति उक्तः सः धूम्रलोचनः असुरः तां अ
भ्यधावत् तदा सा अम्बिका तं हुङ्कारेण एव भस्म चकार उक्तः कथितः असुरः दैत्यः तां देवीं तदा तस्मिन् काले अ
म्बिका देवी तं धूम्रलोचनम् ९ अथेति हे राजन्! अथ अम्बिका तथा क्रुद्धं असुराणां महासैन्यं तीक्ष्णैः शायकैः तथा श
क्तिपरश्वधैः ववर्ष अथ अथेत्यनन्तरं धूम्रलोचनवधानन्तरं अम्बिका देवी असुराणां दैत्यानां महच्च तत् सैन्यं च महा १०६

दु०टी० सैन्यं तम् महासैन्यम् शायकैः बाणैः शक्तयश्च परश्वधाश्च ते शक्तिपरश्वधाः तैः शक्तिपरश्वधैः १० निर्नायक अ०
१०७ सैन्ये देव्याः प्रयासो व्यर्थ इति मत्वा सिंहो युयुधे तत इति हे राजन्! ततः देव्याः स्ववाहनः सिंहः धुतसटः सन् को ६
पात् सुभैरवं नादं कृत्वा असुरसेनायां पपात ततः तदनन्तरं निर्नायकसैन्यदर्शनानन्तरं स्वस्य वाहनः स्ववाहनः
धुताः सटाः येन सः धुतसटः धुताः कम्पिताः सटाः ग्रीवाकेशाः कोपात् क्रोधात् सुभैरवं महान्तं नादं शब्दं असुराणां

णांतथाम्बिका ॥ ववर्षशायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः १० ततोधुतसटःकोपात्कृत्वानादंसु
भैरवम् ॥ पपातासुरसेनायांसिंहोदेव्यास्स्ववाहनः ११ कांश्चित्करप्रहारेणदैत्यानास्येनचापरा
न् ॥ आक्रांत्याचाधरेणान्यान्सजघानमहासुरान् १२ केषांचित्पाटयामासनखैःकोष्ठानिकेश
री ॥ तथातलप्रहारेणशिरांसिकृतवान्पृथक् १३ विच्छिन्नबाहुशिरसःकृतास्तेनतथापरे ॥ प

सेना असुरसेना तस्यां असुरसेनायां असुराणां दैत्यानां पपात प्राविशत 'स्ववाहन इति अर्द्धर्चादित्वात् पुंस्त्वं' स्वीय
वाहन इत्यर्थः ११ कांश्चिदिति हे राजन् ! सः कांश्चित् दैत्यान् करप्रहारेण जघान किंच अपरान् दैत्यान् आस्येन ज
घान किंच अन्यान् महासुरान् अधरेण आक्रान्त्या जघान सः सिंहः करेण प्रहारः करप्रहारः तेन करप्रहारेण करेण ह
स्तेन अपरान् अन्यान् आस्येन मुखेन अधरेण अधरकायेन यद्वा अधरोष्ठेन आक्रान्त्या आक्रमणेन १२ केषामिति हे
राजन्! केशरी केषांचित् कोष्ठानि नखैः पाटयामास तथा तलप्रहारेण शिरांसि पृथक् कृतवान् केशरी सिंहः कोष्ठानि उ १०७

 दरमध्यानि तलेन प्रहारः तलप्रहारः तेन तलप्रहारेण तलेन विस्तृतांगुलिपाणिना शिरांसि मस्तकानि पृथक् देहात् 
भिन्नानि १३ विच्छिन्नेति हे राजन् ! तथा तेन अपरे विच्छिन्नबाहुशिरसः कृताः किंच धुतकेशरः सः अन्येषां कोष्ठात्
रुधिरं पपौ तेन सिंहेन अपरे अन्ये दैत्याः बाहवश्च शिरांसिच बाहुशिरांसि विच्छिन्नानि बाहुशिरांसि येषां ते विच्छि-
न्नबाहुशिरसः सः सिंहः अन्येषां दैत्यानां कोष्ठात् उदरमध्यादिति १४ क्षणेनेति हे राजन् ! महात्मना देव्याःवाहनेन
अतिकोपिना तेन केशरिणा सर्व्वं तत् बलं क्षणेन क्षयं नीतं महात्मना बलवता अति कोपोस्यास्तीति अतिकोपी

पौचरुधिरंकोष्ठादन्येषांधुतकेशरः १४ क्षणेनतद्बलंसर्व्वंक्षयंनीतंमहात्मना ॥ तेनकेशरिणादे
व्यावाहनेनातिकोपिना १५ श्रुत्वातमसुरंदेव्यानिहतंधूम्रलोचनम् ॥ बलंचक्षयितंकृत्स्नंदेवी
केशरिणाततः १६ चुकोपदैत्याधिपतिःशुम्भःप्रस्फुरिताधरः ॥ आज्ञापयामासचतौचण्डमुण्डौ

तेन अतिकोपिना अतिकोपः अतिक्रोधः केशरिणा सिंहेन सर्व्वं समस्तं बलं सैन्यं क्षणेन क्षणमात्रेण क्षयं नाशं नीतं
प्रापितम् १५ श्रुत्वेति हे राजन् ! देव्या निहतं तं धूम्रलोचनं असुरं श्रुत्वा किंच देवी केशरिणा कृत्स्नं बलं क्षयितं श्रुत्वा
ततः दैत्याधिपतिः शुम्भः प्रस्फुरिताधरः सन् चुकोप किंच तौ महासुरौ चण्डमुण्डौ आज्ञापयामास निहतं प्रहारितं
असुरं दैत्यं देव्याः केशरी देवीकेशरी तेन देवीकेशरिणा केशरी सिंहः कृत्स्नं समस्तं बलं सैन्यं क्षयितं नाशितं ततः त
दनन्तरंधूम्रलोचनवधश्रवणानन्तरम् १६ दैत्यानां अधिपतिः दैत्याधिपतिः अधिपतिः स्वामी प्रस्फुरितः अधरोयस्यसः 

 प्रस्फुरिताधरः प्रस्फुरितःकम्पितःअधरः अधरोष्ठः तौ पूर्व्वोक्तौ महान्तौ च तौ असुरौ च महासुरौ असुरौ दैत्यौ चण्डश्च 
 मुण्डश्च तौ चण्डमुण्डौ १७ हे चण्डेति ! हे चण्ड ! हे मुण्ड ! युवां बहुलैः बलैः परिवारितौ सन्तौ तत्र गच्छत किञ्च 
गत्वा युवाभ्यां लघु सा समानीयतां बहुलैः बहुभिः बलैः सैन्यैः परिवारितौ सन्तौ रक्षितौ सन्तौ तत्र तस्मिन् देवी
निकटे गच्छत गच्छतं छन्दोनुरोधाद्बिन्दुलोपः लघुशीघ्रं सा देवी १८ आनयने प्रकारद्वयमाह केशेष्विति हे चण्ड ! हे

महासुरौ १७ हेचण्डहेमुण्डबलैर्बहुलैःपरिवारितौ ॥ तत्रगच्छतगत्वाचसासमानीयतांलघु १८
केशेष्वाकृष्यबद्ध्वावायदिवःसंशयोयुधि ॥ तदाशेषायुधैःसर्व्वैरसुरैर्विनिहन्यताम् १९ तस्यांह
तायांदुष्टायां सिंहेचविनिपातिते ॥ शीघ्रमागम्यतांबद्ध्वागृहीत्वातामथाम्बिकाम् २० ॥ इति
श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्ये धूम्रलोचनवधोनामषष्ठोऽध्यायः ६ ॥ ०

मुण्ड ! केशेषु आकृष्य वा बद्ध्वायदि वः युधि संशयः भवति तदा अशेषायुधैः सर्व्वैः असुरैः सा विनिहन्यतां केशेषु के
शैरित्यर्थः वा अथवा वः वां युवयोः युधि संग्रामे संशयः सन्देहः तदातर्हि अशेषाणि आयुधानि येषांते अशेषायुधाः तैः अ
शेषायुधैः अशेषाणि समस्तानि आयुधानि शस्त्राणि सर्व्वैः समस्तैः असुरैः दैत्यैः सादेवी विनिहन्यतां मथ्यतामित्य
र्थः १९ उपसंहरति तस्यामिति हे चण्ड ! हे मुण्ड ! युवाभ्यां दुष्टायां तस्यां हतायां सत्यां किञ्च सिंहे विनिपातिते सति
अथतां अम्बिकां बद्ध्वा वा गृहीत्वा शीघ्रं आगम्यतां दुष्टायां दुर्व्वचनायां तस्यां अम्बिकायां हतायां सत्यां प्राप्तायां स 

त्यां सिंहे च विनिपातिते सति प्रहारिते सति अथेति पक्षान्तरे अम्बिकां देवीं वा अथवा २० इतिश्रीनागोजिभट्टसम्म



तकृतेसप्तशतीव्याख्यानेधूम्रलोचनवधोनामषष्ठोऽध्यायः ६ ॥ ० ॥ ० ॥ ० ॥

ऋषिरुवाच ॥ आज्ञप्ता इति हे राजन्! ततः आज्ञप्ताः चण्डमुण्डपुरोगमाः चतुरङ्गबलोपेताः दैत्याः तु अभ्युद्यता युधाः सन्तः ययुः ततः तेन शुम्भेन आज्ञप्ताः आज्ञाकृताः चण्डश्च मुण्डश्च चण्डमुण्डौ चण्डमुण्डौपुरोगमौ येषां ते चण्डमुण्डपुरोगमाः पुरोगमौ अग्रसरौ चत्वारि अङ्गानि यस्य तत् चतुरङ्गं, चतुरङ्गंच तत् बलंच चतुरङ्गबलं चतुर

ऋषिरुवाच ॥ आज्ञप्तास्तुततोदैत्याश्चण्डमुण्डपुरोगमाः ॥ चतुरङ्गबलोपेताययुरभ्युद्यतायु
धाः १ ददृशुस्तेततोदेवीमीषद्धासांव्यवस्थिताम् ॥ सिंहस्योपरिशैलेन्द्रशृङ्गेमहतिकाञ्चने २
तेदृष्ट्वातांसमादातुमुद्यमंचक्रुरुद्यताः ॥ आकृष्टचापासिधरास्तथान्येतत्समीपगाः ३ ततःकोपं

ङ्गबलेन उपेताः चतुरङ्गबलोपेताः चतुरङ्गं हस्त्यश्वरथ पदातिं बलं सैन्यं उपेताः युक्ताः अभ्युद्यतायुधाः निष्काशिता युधाः ययुः जग्मुः १ ददृशुरिति शैलेन्द्रशृङ्गे हिमाचलशृङ्गे सिंहस्योपरिस्थितामित्यन्वयः २ ते इति चण्डादयः प्रधानाः समादातुं गृहीतुं उद्यमं उद्योगं उद्यताः उत्साहवन्तो जाताः आकृष्ट चापासिधराः सन्तः तत्समीपगाः गृहीतुमुद्यतानां रक्षणार्थं समीपगा इत्यर्थः ३ अनेन चण्डादीनामपितामसत्वंध्वनितं अतस्तद्वधार्थमिति तामसीप्रादुर्भाव 

माह तत इति मसी लिपिसाधन द्रव्यं तद्वत् श्यामवर्णं निःसरतकाली प्रतिबिम्बादितिभावः ४ भ्रुकुटीति तस्याः अ० ७
कुपितदेव्याः विनिष्क्रान्ता निःसृता ५ विचित्रेति कथंभूता काली विचित्रखट्वाङ्गधरा धरतीति धरा विचित्रं च
तत् खट्वाङ्गम् च विचित्र खट्वाङ्गम् तस्य धरा विचित्रखट्वाङ्गधरा धरति धारयति विचित्रं नाना विधं खट्वाङ्गं पट्टिका
कङ्कालं यद्वा पञ्जरास्थि पुनः कथंभूता काली नरमाला विभूषणा नरमालाविभूषणं यस्याः सा नरमाला विभूषणा न
रमाला मुण्डमाला नरमालेत्यत्र नरशब्दस्तु मुण्डमाला लाक्षणिकः पुनः कथंभूता काली द्वीपिचर्म्मपरीधाना द्वी

चकारोच्चैरम्बिकातानरीन्प्रति ॥ कोपेनचास्यावदनंमसीवर्णमभूत्तदा ४ भ्रुकुटीकुटिलात्तस्या
ललाटफलकाद्द्रुतम् ॥ कालीकरालवदनाविनिष्क्रान्तासिपाशिनी ५ विचित्रखट्वाङ्गधरानरमा
लाविभूषणा ॥ द्वीपिचर्म्मपरीधानाशुष्कमांसातिभैरवा ६ अतिविस्तारवदनाजिह्वाललनभी

पिनः चर्म्म द्वीपिचर्म्मद्वीपिचर्म्मपरीधानं यस्याः सा द्वीपिचर्मपरीधाना द्वीपी व्याघ्रः परीधानं वस्त्रं पुनः कथंभूता
काली शुष्कमांसा शुष्कंमांसं यस्याःसा शुष्कमांसा अर्थात् निर्म्मांसदेहा पुनः कथंभूता काली अतिभैरवा अतिभयं
रवो यस्याः सा अतिभैरवा अति अत्यन्तं भयं भयङ्करं रवः शब्दः ६ अतीति पुन कथंभूता काली अतिविस्तारव
दना अति विस्तारो यस्याः तत् अतिविस्तारं अतिविस्तारं वदनं यस्याः सा अति विस्तारवदना अति अतिशयि
तः वदनं मुखं पुनः कथंभूता काली जिह्वाललनभीषणा जिह्वायाः ललनं जिह्वाललनं जिह्वाललनेन भीषणा ११३

दु०टी० जिह्वाललनभीषणा ललनं चालनं भीषणा भयङ्करी पुनः कथंभूता काली निमग्ना रक्तनयना आरक्तानि च तानि न अ०
११२ यनानि च आरक्तनयनानि निमग्नानि आरक्त नयनानि यस्याः सा निमग्नारक्तनयना आरक्तानि अरुणानि नयनानि ने ७
त्राणि निमग्नानि निम्नप्रविष्टानि पुनः कथंभूता काली नादापूरितदिङ्मुखा दिशां मुखं दिङ्मुखं नादेन आपूरितं
दिङ्मुखं यया सा नादापूरितदिङ्मुखा नादेन शब्देन आपूरितं व्याप्तम् ७ सेति हे राजन् सुरारीणां तत्र सैन्ये वेगेन अ
भिपतिता सा महासुरान् घातयन्ती सती तत् बलं अभक्षयत् सुराणां अरयः सुरारयः तेषां सुरारीणां सुराणां देवानां

षणा ॥ निमग्नारक्तनयनानादापूरितदिङ्मुखा ७ सावेगेनाभिपतिताघातयन्तीमहासुरान् ॥
सैन्येतत्रसुरारीणामभक्षयततद्बलम् ८ पार्ष्णिग्राहांकुशग्राहियोधघण्टासमन्वितान् ॥ समादा
यैकहस्तेनमुखेचिक्षेपवारणान् ९ तथैवयोधंतुरगैरथंसारथिनासह ॥ निक्षिप्यवक्त्रेदशनैश्चर्व्व

अरयः शत्रवः दैत्यः तत्र तस्मिन् सैन्ये सा देवी महासुरान् महादैत्यान् बलं सैन्यम् ८ पार्ष्णीति हे राजन् ! सा पार्ष्णि
ग्राहांकुशग्राहि योधघण्टासमन्वितान् वारणान् एक हस्तेन समादाय मुखे चिक्षेप सा देवी घण्टाभिः समन्विताः घ
ण्टासमन्विताः पार्ष्णिग्राहाश्च अंकुशग्राहिणश्च योधाश्च घण्टासमन्विताश्च ते पार्ष्णिग्राहांकुशग्राहियोधघ
ण्टासमन्विताः तान् पार्ष्णिग्राहांकुशग्राहियोधघण्टासमन्वितान् समन्विताः युक्ताः पार्ष्णिग्राहाः गजपार्श्वर
क्षकाः अंकुशग्राहिणः महामात्राः योधाः गजारूढाः वीराः वारणान् हस्तिनः एकश्चासौ हस्तश्च एक हस्तः तेन ११२

एकहस्तेन समादाय गृहीत्वा ६ तथैवेति हे राजन् ! तथैव योधं तुरगैः सारथिना सह रथं वक्त्रे निक्षिप्य दशनैः अति भैरवं यथास्यात्तथा चर्वयन्ति योधं योद्धारं योधमिति जातावेक वचनं तुरगैः अश्वैः वक्त्रे मुखे निक्षिप्य गृहीत्वा दशनैः दन्तैः अतिभैरवं अतिभयङ्करम् यथास्यात्तथा चर्वयन्तीति वर्त्तमानसामीप्ये भूतेलट् १० एकमिति हे राजन् ! सा एकं केशेषु जग्राह अथच अपरं अन्यं ग्रीवायां जग्राह किंच अन्यं पादेन एव आक्रम्य उरसा अपोथयत् सा काली ग्रीवा यां कण्ठे पादेन चरणेन उरसा वक्षस्थलेन अपोथयत् अवधीत् ११ तैरिति हे राजन् ! सा तैः असुरैः मुक्तानि शस्त्राणि

यन्त्यतिभैरवम् १० एकंजग्राहकेशेषुग्रीवायामथचापरम् ॥ पादेनाक्रम्यचैवान्यमुरसान्यमपोथयत् ११ तैर्मुक्तानिचशस्त्राणिमहास्त्राणितथासुरैः ॥ मुखेनजग्राहरुषादशनैर्मथितान्यपि १२ बलिनांतद्बलंसर्व्वमसुराणांमहात्मनाम् ॥ ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा १३ असि

तथा महास्त्राणि मुखेन रुषा जग्राह किंच दशनैः मथितान्यपितैः प्रसिद्धैः असुरैः दैत्यैः मुक्तानि क्षिप्तानि महास्त्राणि ब्रह्मास्त्रादीनि रुषा क्रोधेन दशनैः दन्तैः मथितान्यपि मथितानीव चकारेत्यर्थः १२ बलिनामिति हे राजन् ! सा बलिनां महात्मनां असुराणां सर्व्वं तत् बलं ममर्द किंच अन्यान् अभक्षयत् तथाच अन्यान् अताडयत् सा काली बलमस्ति येषां ते बलिनः तेषां बलिनः बलं पराक्रमः महात्मनां महादेहानां असुराणां दैत्यानां सर्व्वं समस्तं बलं सैन्यं ममर्द अ मर्द्दयत् अन्यान् दैत्यान् १३ असिनेति हे राजन् ! तया केचित् असुराः असिना निहताः सन्तः विनाशं जग्मुः केचित् अ

दु॰टी॰ सुराः खट्वाङ्गताडिताः सन्तः विनाशं जग्मुः तथा केचित् असुराः दन्ताग्राभिहताःसन्तः विनाशं जग्मुः तया काल्याऽ अ॰
११४ सिना खड्गेन निहताः सन्तः प्रहारितः सन्तः खट्वाङ्गेन ताडिताः खट्वाङ्गताडिताः खट्वाङ्गेन पट्टितया यद्वा नरास्थि ७
पञ्जरेण ताडिताःसन्तः प्रहारिताःसन्तः असुराः दैत्याः दन्तानां अग्राणि दन्ताग्राणि दन्ताग्रैः अभिहताः दन्ताग्राभिहताः
अभिहताः ताडिताः विनाशं मरणं जग्मुः प्रापुः १४ क्षणेनेति तया असुराणां सर्व्वं तत् बलं क्षणेन निपातितं दृष्ट्वा
चण्डः अतिभीषणां तां कालीं अभिदुद्राव तया काल्या असुराणां दैत्यानां सर्व्वं समस्तं बलं सैन्यं क्षणेन क्षणमात्रेण

नानिहताःकेचित्केचित्खट्वाङ्गताडिताः ॥ जग्मुर्विनाशमसुरादन्ताग्राभिहतास्तथा १४ क्षणेन
तद्बलंसर्वमसुराणांनिपातितम् ॥ दृष्ट्वाचण्डोभिदुद्रावतांकालीमतिभीषणाम् १५ शरवर्षैर्महा
भीमैर्भीमाक्षींतांमहासुरः ॥ छादयामासचक्रैश्चमुण्डःक्षिप्तैःसहस्रशः १६ तानिचक्राण्यनेकानि

निपातितं प्रहारितं अतिभीषणां अतिभयंकरीं तां प्रसिद्धाम् १५ शरेति हे राजन्! महासुरः चण्डः महाभीमैः श
रवर्षैः किंच मुण्डः सहस्रशः क्षिप्तैः चक्रैः भीमाक्षींतां छादयामास महासुरः महादैत्यः महाभीमैः महाभयं
करैः शराणां वर्षाणि शरवर्षाणि तैः शरवर्षैः शराणां बाणानां वर्षाणि वृष्टयः भीमानि अक्षीणि यस्याः सा भीमाक्षी
तां भीमाक्षीं भीमानि भयंकराणि अक्षीणि नेत्राणि तां देवीम् १६ तानीति हे राजन्! तन्मुखं विशमानानि
अनेकानि तानिचक्राणि घनोदरं विशमानानि सुबहूनि अर्कबिम्बानि यथाबभुः तस्याःमुखं तन्मुखं तस्याः काल्या ११४

विशमानानि प्रविष्टानि घनस्य उदरं घनोदरं तत् घनोदरं घनस्य मेघस्य उदरंमध्यं विशमानानि प्रविष्टानि सुबहूनि अनेकानि अर्कस्य बिम्बानि अर्कबिम्बानि अर्कस्य सूर्य्यस्य बिम्बानि मण्डलानि यथा इव बभुः शुशुभिरे १७ तत इति हे राजन्! ततः तदनन्तरं सा काली अतिरुषा भीमं यथास्यात्तथा जहास अतिरुषा अतिक्रोधेन भीमं भयङ्करं यथास्यात्तथा कथम्भूता काली भैरवनादिनी भैरवः नादो यस्याः सा भैरवनादिनी भैरवः भयङ्करः नादः शब्दः पुनः कथम्भूता काली करालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वला दुर्दर्शाश्चते दशनाश्च दुर्दर्शदशनाःकरालं च तत्वक्त्रं च करालवक्त्रं

विशमानानितन्मुखम् ॥ बभुर्यथार्कबिम्बानिसुबहूनिघनोदरम् १७ ततोजहासातिरुषाभीमंभैरवनादिनी ॥ कालीकरालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वला १८ उत्थायचमहासिंहंदेवीचण्डमधावत ॥ गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाच्छिनत् १९ अथमुण्डोभ्यधावत्तांदृष्ट्वाचण्डंनिपातितं

करालवक्त्रस्य अन्तः करालवक्त्रान्तः करालवक्त्रान्ते दुर्दर्शदशनाः करालवक्त्रान्तर्दुर्दर्श दशनाः करालवक्त्रान्तर्दुर्दर्शदशनैः उज्ज्वला करालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वला दुर्दर्शाः भयङ्कराः दशनाः दन्ताः करालं भयङ्करं वक्त्रंमुखं अन्तः मध्यं उज्ज्वला तेजोमया १८ उत्थाय चेति हे राजन्! देवी महासिं उत्थाय हमित्युक्त्वा चण्डं अधावत किञ्च केशेषु गृहीत्वा अस्याशिरः तेन असिना अच्छिनत् महांश्चासौ असिश्च महासिः तं महासिं असिः खड्गः केशेषु केशान् अस्यचण्डस्य शिरःमस्तकं असिना खड्गेन१९ अथेति हे राजन्! अथ चण्डंनिपातितं दृष्ट्वा मुण्डःतां अभ्यधावत् सारुषा खड्गाभिहतंतं

अपिभूमौ अपातयत् अथ अथेत्यनन्तरं चण्डवधानन्तरं निपातितं प्रहारितं तां कालीं साकाली रुषा क्रोधेन खड्गेन
अभिहतः खड्गाभिहतः तंखड्गाभिहतं अभिहतःताडितःतंमुण्डम् २० हतइति हे राजन्! ततःहतशेषंसैन्यं चण्डं किंच
सुमहावीर्य्यं मुण्डंनिपातितं दृष्ट्वादिशः भयातुरंयथास्यात्तथा भेजेततःतदनन्तरं चण्डमुण्डवधानन्तरं हतात्शेषं हतशेषं
हतात् प्रहारितात् शेषं अवशिष्टं महत्वीर्य्यं यस्यसः महावीर्य्यः तंमहावीर्य्यं वीर्य्यं पराक्रमः निपातितं प्रहारितं भयेन

म् ॥ तमप्यपातयद्भूमौसाखड्गाभिहतंरुषा २० हतशेषंततःसैन्यंदृष्ट्वाचण्डंनिपातितम् ॥ मुण्डं
चसुमहावीर्य्यंदिशोभेजेभयातुरम् २१ शिरश्चण्डस्यकालीचगृहीत्वामुण्डमेवच ॥ प्राहप्रचण्डा
ट्टहासमिश्रमभ्येत्यचण्डिकाम् २२ मयातवात्रोपहृतौचण्डमुण्डौमहापशू ॥ युद्धयज्ञेस्वयंशुम्भं
निशुम्भंचहनिष्यसि २३ ऋषिरुवाच ॥ तावानीतौततोदृष्ट्वाचण्डमुण्डौमहासुरौ॥ उवाचकालीं

आतुरं भयातुरं आतुरं व्याकुलम् २१ शिर इति हे राजन्! कालीचण्डस्यशिरः किञ्च मुण्डं एवगृहीत्वा चण्डिकां अभ्येत्य
चण्डाट्टहासमिश्रं यथास्यात्तथा प्राह शिरः मस्तकं मुण्डं एव सशिरस्कं एव चण्डिकां देवीं अभ्येत्य अभिमुखमागत्य
प्रचण्डश्चासौ अट्टहासश्च प्रचण्डाट्टहासः प्रचण्डाट्टहासेनमिश्रं प्रचण्डाट्टहासमिश्रं प्रचण्डःमहान् मिश्रंयुक्तं प्राह
उवाच २२ मयेति हे देवि! मया महापशू चण्डमुण्डौ तत्र उपहृतौ अत्र युद्धयज्ञेत्वं स्वयं शुम्भं किञ्च निशुम्भं हनिष्यसि
महान्तौचतौ पशूच महापशू चण्डश्च मुण्डश्चतौ चण्डमुण्डौ उपहृतौ उपहारीकृतौ अत्र अस्मिन् युद्धएव यज्ञः युद्धयज्ञः ११६

दु०टी० तस्मिन् युद्धयज्ञे २३ ऋषिरुवाच ताविति हे राजन्! ततः आनीतौ महासुरौ तौ चण्डमुण्डौ दृष्ट्वा कल्याणी चण्डिका अ०
११७ कालीं ललितं वचः उवाच ततः तदनन्तरं कालीवाक्यश्रवणानन्तरं महान्तौ च तौ असुरौच महासुरौ तौ महासुरौ असुरौ ७
दैत्यौ तौ प्रसिद्धौ चण्डश्च मुण्डश्चतौ चण्डमुण्डौ तौ चण्डमुण्डौ कल्याणी कल्याणकर्त्री चण्डिका कौशिकी कालीं
ललाटभवांदेवीं ललितं मनोहरंवचः वाक्यम् २४ यस्मादिति हे देवि! यस्मात् त्वं चण्डंकिंच मुण्डं गृहीत्वाउपागता ततः
त्वंलोके चामुण्डाइति ख्याता भविष्यसि यस्मात्कारणात् उपागता प्राप्ता ततः तस्मात् कारणात् २५ ॥ इति
श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्याने चण्डमुण्डवधोनामसप्तमोध्यायः ७ ॥ ० ॥ ०

कल्याणीललितंचण्डिकावचः २४ यस्माच्चण्डंचमुण्डंचगृहीत्वात्वमुपागता ॥ चामुण्डेतिततो
लोकेख्यातादेविभविष्यसि २५ इतिश्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येचण्डमु
ण्डवधोनामसप्तमोध्यायः ७॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

ऋषिरुवाच॥ चण्डेचनिहतेदैत्यैमुण्डेचविनिपातिते ॥ बहुलेषुचसैन्येषुक्षयितेष्वसुरेश्वरः १ त

ऋषिरुवाच ॥ चण्डे इति हे राजन्! दैत्ये चण्डेनिहतेसति किंच मुण्डे विनिपातिते सति किंच बहुलेषु सैन्येषु
क्षयितेषु सत्सुकोपपराधीनचेताः प्रतापवान् असुरेश्वरः ततः शुम्भः सर्वसैन्यानां दैत्यानां उद्योगं आदिदेशह निहते
सति प्रहारिते सति विनिपातिते सति मृते सति बहुलेषु अनेकेषु क्षयितेषु सत्सुक्षीणेषु सत्सुकोपेन पराधीनं चेतोयस्य ११७

 सः कोपपराधीनचेताः कोपेन क्रोधेन पराधीनंपरतन्त्रंचेतः अन्तः करणं प्रतापोविद्यतेयस्यसः प्रतापवान् प्रतापः तेजः असुराणां ईश्वरः असुरेश्वरः असुराणां दैत्यानां ईश्वरः स्वामी सः इति ततः सर्व्वाणि सैन्यानि येषांते सर्वसैन्याःतेषां सर्व्वसैन्यानां सर्व्वाणि समस्तानि उद्योगं उद्यमं आदिदेशह आज्ञापयामास हेति पादपूरणे १। २ अद्येति अद्य सर्व्वबलैः सहिताः दैत्याः निर्यान्तु उदायुधाः षट् अशीति दैत्याः निर्यान्तु किंच कम्बूनां चतुरशीतिः दैत्याः स्वबलै 

ततःकोपपराधीनचेताःशुम्भःप्रतापवान् ॥ उद्योगंसर्व्वसैन्यानांदैत्यानामादिदेशह २ अद्यसर्व्व बलैर्दैत्याःषडशीतिरुदायुधाः ॥ कम्बूनांचतुरशीतिर्निर्यान्तुस्वबलैर्वृताः ३ कोटिवीर्य्याणिपञ्चा शदसुराणांकुलानिवै ॥ शतंकुलानिधौम्राणांनिर्गच्छन्तुममाज्ञया ४ कालकादौर्हृदामौर्य्याःका

र्वृताः सन्तः निर्यान्तु अद्य इदानीं वर्त्तमानकाले सर्व्वाणिच तानि बलानि च सर्व्वबलानि तैः सर्वबलैः सर्वाणि समस्ता नि बलानि सैन्यानिसहिताः युक्ताः निर्यान्तु निर्गच्छन्तु उदायुधाः उदायुधनामानः कम्बूनां कम्बुनाम्नां स्वस्य बलानि स्वबलानि तैः स्वबलैः बलानि सैन्यानि वृताःसन्तः वेष्टिताःसन्तः निर्यान्तु निर्गच्छन्तु ३ कोटीतिमम आज्ञया कोटिवी र्य्याणि असुराणां पञ्चाशत्कुलानिवैनिर्गच्छन्तु धौम्राणांशतंकुलानि निर्गच्छन्तु कोटिवीर्य्याणि कोटिवीर्य्यनामानःदैत्याः असुराणां दैत्यानां कुलानिवृन्दानि वै इति निश्चयेन धौम्राणां धूम्रवंशोद्भवानां दैत्यानां कुलानि वृन्दानि ४ कालकादा 

दु०टी० विति कालकाः दौर्हृदाः मौर्य्याः तथा कालकेयाः असुराः युद्धाय सज्जाः सन्तः मम आज्ञया त्वरिता निर्यान्तु कालकाः अ०
११६ कालकनामानः दैत्याः दौर्हृदाः दुर्हृदवंशजाः दैत्याः मौर्य्याः मौर्य्यनामानः दैत्याः कालकायाः अपत्यानिपुमांसः कालकाः ८
असुराः दैत्याः युद्धाय संग्रामायसज्जाः सन्तः ससामग्रीकाः सन्तः त्वरिताः शीघ्रं निर्यान्तु निर्गच्छन्तु ५ इतीति हे राजन् ! इति आज्ञाप्य भैरवशासनः असुरपतिः शुम्भः बहुभिः महासैन्यसहस्रैः वृतः सन् निर्जगाम इति अनेन प्रकारेण आज्ञाप्य आज्ञांकृत्वा भैरवंशासनं यस्यसः भैरवशासनः भैरवं उग्रंशासनं आज्ञा असुराणांपतिः असुरपतिः असुराणां दैत्यानां

लकेयास्तथासुराः ॥ युद्धायसज्जानिर्यान्तुआज्ञयात्वरितामम ५ इत्याज्ञाप्यासुरपतिः शुम्भोभै
रवशासनः ॥ निर्जगाममहासैन्यःसहस्रैर्बहुभिर्वृतः ६ आयान्तंचण्डिकादृष्ट्वातत्सैन्यमतिभी
षणम् ॥ ज्यास्वनैःपूरयामासधरणीगगनान्तरम् ७ ततःसिंहोमहानादमतीवकृतवान्नृप ॥

पतिः स्वामी बहुभिः असंख्यातैः महान्ति च तानि सैन्यानि च महासैन्यानि महासैन्यानां सहस्राणि महासैन्यसहस्राणितैः महासैन्यसहस्रैः वृतः सन् वेष्टितः सन् ६ आयान्तमिति हे राजन् ! चण्डिका अतिभीषणं तत् सैन्यं आयान्तं दृष्ट्वा धरणीगगनान्तरं ज्यास्वनैः पूरयामास चण्डिका देवी अतिभीषणं अतिभयङ्करं तत् प्रसिद्धं आयान्तं आगतं धरणी च गगनं च धरणीगगने धरणीगगनयोः अन्तरं धरणी गगनान्तरं धरणी पृथ्वी गगनं आकाशं अन्तरं मध्यं ज्यायाः स्वनाः ज्यास्वनाः तैः ज्यास्वनैः ज्यायाः प्रत्यश्चायाः स्वनाः शब्दाः पूरयामास व्याप्तंचकार ७ तत इति हे नृप ! ततः सिंहः अतीव ११६

दु॰टी॰ महानादं कृतवान् अम्बिका घण्टास्वनेन तन्नादान् उपबृंहयत् ततः तदनन्तरं ज्यास्वनैः धरणीगगनान्तरं व्याप्तान अ॰
१२० न्तरं अतीव अत्यन्तमेव महानादं महांश्चासौ नादश्च महानादः तं महानादं नादः शब्दः अम्बिका देवी घण्टायाः ८
स्वनः घण्टास्वनः तेन घण्टास्वनेन स्वनः शब्दः तस्य नादाः तन्नादाः तान् तन्नादान् तस्य सिंहस्यनादाः शब्दाः उप
बृंहयत् वर्द्धयत् ८ धनुरिति हे राजन्! धनुर्ज्यासिंहघण्टानां भीषणैः निनादैः नादापूरितदिङ्मुखा विस्तारितानना
काली जिग्ये धनुषः ज्या धनुर्ज्या धनुर्ज्या च सिंहश्च घण्टा च ताः धनुर्ज्यासिंहघण्टाः तासां धनुर्ज्यासिंहघण्टानां ज्या

घण्टास्वनेनतन्नादानम्बिकाचोपबृंहयत् ८ धनुर्ज्यासिंहघण्टानांनादापूरितदिङ्मुखा ॥ निनादै
र्भीषणैःकालीजिग्येविस्तारितानना ९ तन्निनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशम् ॥ देवीसिंहस्त
थाकालीसरोषैःपरिवारिताः १० एतस्मिन्नन्तरेभूपविनाशायसुरद्विषाम् ॥ भवायामरसिंहाना

प्रत्यश्चा भीषणैः भयङ्करैः निनादैः शब्दैः दिशामुखं दिङ्मुखं नादैः आपूरितं दिङ्मुखं यया सा नादापूरितदिङ्मुखा नादैः
शब्दैः आपूरितं व्याप्तं विस्तारितं आननं यया सा विस्तारितानना आननं मुखं जिग्ये जिता देव्या धनुरादिशब्दैः काली
शब्दोजित इति भावः ९ तमिति हे राजन! तन्निनादं उपश्रुत्य चतुर्दिशं सरोषैः दैत्यसैन्यैः देवीसिंहः तथा काली परिवारि
ताः तेषांनिनादः तन्निनादः तं तन्निनादं तेषां धनुर्ज्यासिंहघण्टानां निनादः शब्दः उपश्रुत्य श्रुत्वा चतुर्दिशं चतुर्दिक्षु रोषे ८
ण सहवर्त्तमानानि सरोषाणितैः सरोषैः रोषेण क्रोधेन सहवर्त्तमानानि युक्तानि तानि दैत्यानां सैन्यानि दैत्यसैन्यानितैः १२०

दैत्यसैन्यैः देवी चण्डी काली ललाटजा परिवारिता वेष्टिता १० एतस्मिन्निति हे भूप ! एतस्मिन् अन्तरे सुरद्विषां वि
नाशाय अमरसिंहानां भवाय अतिवीर्य्यबलान्विताः ब्रह्मेशगुहविष्णूनां तथाच इन्द्रस्य शक्तयः शरीरेभ्यः विनिष्क्रम्य
तद्रूपैः चण्डिकांययुः एतस्मिन् अन्तरे देवीदानवसंपातावसरे सुरद्विषां दैत्यानां अमरसिंहानां अमरश्रेष्ठानां भवाय
सम्पदे अतिवीर्य्यंचबलंच ते अतिवीर्यबले अतिवीर्यबलाभ्यां अन्विताः अतिवीर्य्यबलान्विताः अतिवीर्य्यं अतितेजः
बलं सामर्थ्यं अन्विताः युक्ताः ११ ब्रह्माच ईशश्च गुहश्च विष्णुश्चते ब्रह्मेशगुहविष्णवः तेषां ब्रह्मेशगुहविष्णूनां

मतिवीर्य्यबलान्विताः ११ ब्रह्मेशगुहविष्णूनांतथेन्द्रस्यचशक्तयः ॥ शरीरेभ्योविनिष्क्रम्य
तद्रूपैश्चण्डिकांययुः १२ यस्यदेवस्ययद्रूपंयथाभूषणवाहनम् ॥ तद्वद्देवहितच्छक्तिरसुरान्यो
द्धुमाययौ १३ हंसयुक्तविमानाग्रेसाक्षसूत्रकमण्डलुः ॥ आयाताब्रह्मणःशक्तिर्ब्रह्माणीसाभिधी

ईशः शिवः गुहः कार्त्तिकेयः विष्णुशब्देन वाराहनृसिंहावपि शक्तयः स्वव्यतिरेकिण्यः देवताःशरीरेभ्यः ब्रह्मादिदेहेभ्यः
विनिष्क्रम्य निर्गत्य तेषां रूपाणि तद्रूपाणि तैः तद्रूपैः तेषां ब्रह्मादीनां रूपाणि स्वरूपाणि चण्डिकां देवीं ययुः प्रापुः १२
यस्येति हे राजन् ! यस्य देवस्य यत् रूपं भवति तथा भूषणवाहनं भवति तद्वत् एव तच्छक्तिः असुरान् योद्धुं हि आययौ
रूपं स्वरूपं भूषणं च वाहनं च भूषणवाहने भूषणवाहनयोः समाहारः भूषणवाहनं तद्वत् एव तथाविधरूपभूषण
वाहनेत्यर्थः तेषां शक्तिः तच्छक्तिः तेषां ब्रह्मादीनां शक्तिः स्वव्यतिरेकिणी देवता असुरान् दैत्यान् हीति निश्चयेन १३

दु०टी० हंसेति हे राजन्! हंसयुक्तविमाना अग्रेस्थिता साक्षसूत्रकमण्डलुः सा ब्रह्मणः शक्तिः आयाता सा का या जनैः ब्रह्माणी अ०
१२२ अभिधीयते हंसेनयुक्तं हंसयुक्तं हंसयुक्तं च तत् विमानं च हंसयुक्तविमानं हंसयुक्तविमानस्य अग्रं हंसयुक्तविमानाग्रं ८
तस्मिन् हंसयुक्तविमानाग्रे अक्षसूत्रं च कमण्डलुश्च अक्षसूत्रकमण्डलू ताभ्यां सहवर्त्तमाना साक्षसूत्रकमण्डलुः अक्ष
सूत्रं जपमाला सहवर्त्तमाना युक्ता शक्तिः स्वव्यतिरेकिणी देवता आयाता आगता अभिधीयते कथ्यते १४ माहेश्वरी
ति हे राजन्! वृषारूढा त्रिशूलवरधारिणी महाहिवलया चन्द्ररेखाविभूषणा माहेश्वरी प्राप्ता वृषे आरूढा वृषारूढा

यते १४ माहेश्वरीवृषारूढात्रिशूलवरधारिणी ॥ महाहिवलयाप्राप्ताचन्द्ररेखाविभूषणा १५
कौमारीशक्तिहस्ताच मयूरवरवाहना ॥ योद्धुमभ्याययौदैत्यानम्बिकागुहरूपिणी १६ तथैववै

आरूढा स्थिता त्रिशूलंच वरंच त्रिशूलवरे त्रिशूलवरयोः धारिणी त्रिशूलवरधारिणी महाही वलयौ यस्याःसा
महाहिवलया महाही वासुकितक्षकौ तौ वलयौ कङ्कणौ चन्द्रस्य रेखा चन्द्ररेखा चन्द्ररेखाविभूषणं यस्याः सा चन्द्र
रेखाविभूषणा रेखा कला १५ कौमारीति हे राजन्! शक्तिहस्ता मयूरवरवाहना गुहरूपिणी कौमारी अम्बिका
दैत्यान् योद्धुं अभ्याययौ शक्तिः हस्ते यस्याः सा शक्तिहस्ता मयूरवरं वाहनं यस्याः सा मयूरवरवाहना मयूर
वरं मयूरश्रेष्ठं गुहरूपिणी गुहसमानाकारा कौमारी कुमारसम्बन्धिनी अम्बिका शक्तिः १६ तथैवेति हे
राजन्! तथैव गरुडोपरिसंस्थिता शङ्खचक्रगदाशार्ङ्गखड्गहस्ता वैष्णवी शक्तिः अभ्युपाययौ गरुडस्य उपरि १२२

दु०टी० गरुडोपरि शङ्खश्च चक्रं च गदा च शार्ङ्गश्च खड्गश्च ते शङ्खचक्रगदाशार्ङ्गखड्गाः ते हस्तेषु यस्याः सा शङ्खचक्र अ० ८
१२३ गदाशार्ङ्गखड्गहस्ता शार्ङ्गं धनुः अत्र शार्ङ्गपदेन बाणोऽप्युपलक्ष्यते वैष्णवी विष्णुसम्बन्धिनी शक्तिः बाहुभिर्गरुडा
रूढाशङ्खचक्रगदासिनी । शार्ङ्गबाणधराजाता वैष्णवीरूपशालिनीति वामनपुराणात् एतेनास्याः षड्भुजत्वमु
क्तम् १७ यज्ञेति हे राजन् ! अतुलं यज्ञवाराहं रूपं बिभ्रतःहरेःवाराहीं तनुं बिभ्रती या शक्तिः भवति सा अपि तत्र आय
यौ अतुलं महत् यज्ञवाराहं यज्ञाङ्गकल्पितं वाराहाकाररूपं स्वरूपं बिभर्तीति बिभ्रन् तस्य बिभ्रतः बिभ्रतः धारयतः

वैष्णवीशक्तिर्गरुडोपरिसंस्थिता ॥ शङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ १७ यज्ञवाराहमतुलं
रूपंयाबिभ्रतोहरेः ॥ शक्तिःसाप्यापययौतत्रवाराहींबिभ्रतीतनुम् १८ नारसिंहीनृसिंहस्यबि
भ्रतीसदृशंवपुः ॥ प्राप्तातत्रसटाक्षेपक्षिप्तनक्षत्रसंहतिः १९ वज्रहस्तातथैवैन्द्रीगजराजोपरि

हरेः विष्णोः वाराहीं वराहसम्बन्धिनीं तनुं मूर्तिं बिभ्रती बिभर्तीति बिभ्रती बिभर्त्ति धारयतिं तत्र तस्मिन् संग्रामे
आययौ आगता १८ नारसिंहीति हे राजन् ! सटाक्षेपक्षिप्तनक्षत्रसंहतिः नृसिंहस्य सदृशं वपुः बिभ्रती नारसिंही
तत्र प्राप्ता सटानां आक्षेपः निःक्षेपः सटाक्षेपः सटाक्षेपेण क्षिप्ता नक्षत्रसंहतिर्यया सा सटाक्षेपक्षिप्तनक्षत्रसंहतिः
सटानां ग्रीवाकेशानां आक्षेपः प्रक्षेपः क्षिप्ता इतः ततः पातिता नक्षत्रसंहतिः नक्षत्रसमूहः सदृशं तुल्यं वपुः शरीरं
बिभर्तीति बिभ्रती बिभर्त्ति धारयति नारसिंही नृसिंहसम्बन्धिनी शक्तिः तत्र तस्मिन् युद्धे १९ वज्रेति हे राजन् ! तथैव १२३

 वज्रहस्ता गजराजोपरिस्थिता सहस्रनयना ऐन्द्री शक्तिः तत्र प्राप्ता यथा शक्रः भवति तथैव सा भवति वज्रंहस्ते यस्याः सा वज्रहस्ता गजराजस्य उपरि गजराजोपरि गजराजस्य ऐरावतस्य सहस्रं नयनानि यस्याः सा सहस्रनयना नयनानि नेत्राणि ऐन्द्री इन्द्रसम्बन्धिनी तत्र तस्मिन् युद्धे शक्रः इन्द्रः सा इन्द्राणी २० अतिविशिष्टतेजसः कौशिक्याः समीपे स्वयं गन्तुमशक्तास्तादेवशक्तीरीशानो देव्यै दर्शितवानित्याह तत इति हे राजन् ! ततः ताभिः परिवृतः ईशानः इति चण्डिकांआह इतीति किं हे चण्डिके ! त्वया देवशक्तिभिः सह असुराः मम प्रीत्या शीघ्रं हन्य 

स्थिता ॥ प्राप्तासहस्रनयनायथाशक्रस्तथैवसा २० ततःपरिवृतस्ताभिरीशानोदेवशक्तिभिः ॥

हन्यन्तामसुराश्शीघ्रंममप्रीत्याहचण्डिकाम् २१ ततोदेवीशरीरात्तुविनिष्क्रान्तातिभीषणा ॥

चण्डिकाशक्तिरत्युग्राशिवाशतनिनादिनी २२ साचाहधूम्रजटिलमीशानमपराजिता ॥ दूतत्वं

न्तां ततः तदनन्तरं देवशक्तिः एकत्रगमनानन्तरं ताभिः देवशक्तिभिः परिवृतः वेष्टितः ईशानः शिवः आह उवाच देवानां शक्तयः देवशक्तयः ताभिः देवशक्तिभिः देवानां ब्रह्मादीनां शक्तयः देव्यः असुराः दैत्याः हन्यन्तांप्रहार्यन्ताम् २१ यस्यापि सहायप्रदर्शनेन या दृष्टा भगवती तस्योत्तरमाह किन्तु काचिच्छक्तिरित्याह तत इति हे राजन् ! ततः देवीशरीरात्तु अतिभीषणा अत्युग्रा शिवाशतनिनादिनी चण्डिका शक्तिः विनिष्क्रान्ता ततः तदनन्तरं शिववाक्यश्रवणानन्तरं देव्याः शरीरं देवीशरीरं तस्मात् देवीशरीरात् अतिभीषणा दर्शनमात्राद्भयंकरी अत्युग्रा रौद्रस्वभावा शिवा 

 नां शतं शिवाशतं शिवाशतेन निनदतीति शिवाशतनिनादिनी शिवानां शृगालीनां निनदति शब्दंकरोति चण्डिका 
अत्यन्तकोपना शक्तिः देवी विनिष्क्रान्ता निःसृता २२ साचेति हे राजन् ! अपराजिता सा धूम्रजटिलं ईशानं इति आह इतीति किं हे भगवन् ! त्वं दूतः सन् शुम्भनिशुम्भयोः पार्श्वं गच्छ अपरैः अजिता अपराजिता अपरैः शत्रुभिःसा देवी धूम्रजटिलं धूम्रवर्णजटावन्तं ईशानं शिवं आह उवाच शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोःशुम्भनिशुम्भयोःपार्श्वं निकटम् २३ ब्रूहीति हे भगवन् ! त्वं अतिगर्विवतौ दानवौ शुम्भं किंच निशुम्भं किंच तान् ब्रूहि तान् कान् ये

गच्छभगवन्पार्श्वंशुम्भनिशुम्भयोः २३ ब्रूहिशुम्भंनिशुम्भंचदानवावतिगर्विवतौ ॥ येचान्ये
दानवास्तत्रयुद्धायसमुपस्थिताः २४ त्रैलोक्यमिन्द्रोलभतांदेवाःसन्तुहविर्भुजः ॥ यूयंप्रयात
पातालंयदिजीवितुमिच्छथ २५ बलावलेपादथचेद्भवन्तोयुद्धकांक्षिणः ॥ तदागच्छततृप्यन्तु

अन्ये दानवाः तत्र युद्धाय समुपस्थिताः तान् दानवान् तत्र शुम्भान्तिके समुपस्थिताः आगताः २४ वचनमाह त्रैलोक्यमिति हे शुम्भादयः इन्द्रः त्रैलोक्यं लभतां देवाः हविर्भुजः सन्तु यूयं यदि जीवितुं इच्छथ तर्हि पातालं प्रयात लभतां प्राप्नुयात् हविः भुञ्जन्तीति हविर्भुजः हविः साकल्यं प्रयात गच्छत २५ बलेति हे शुम्भादयः अथभवन्तः बलावलेपात् युद्धकांक्षिणः भवन्तिचेत् तत् यूयं आगच्छत मच्छिवाः वः पिशितेन तृप्यन्तु अथ अथवा बलस्य अवलेपः बलावलेपः तस्मात्
बलावलेपात् अवलेपः गर्वः युद्धं कांक्षन्तीति युद्धकांक्षिणः चेत् यदि तत् तर्हि मम शिवाः मच्छिवाः शिवाः देव्यः 

दु०टी० वः युष्माकं पिशितेन मांसेन २६ यत इति हे राजन् ! यतः तया देव्या स्वयं शिवः दौत्येन नियुक्तः ततः अस्मिन् अ०
१२६ लोके सा शिवदूती इति ख्यातिं आगता यतः यस्मात्कारणात् दूतस्य भावः दूत्यं दूत्यमेव दौत्यं तेन दौत्येन ८
भावः धर्मः नियुक्तः प्रेरितः ततः तस्मात्कारणात् सा देवी ख्यातिं प्रसिद्धिं आगता प्राप्ता २७ तेपीति हे राजन् ! शर्व्वाख्यातं देव्याः वचः श्रुत्वा ते महासुराः अपि अमर्षापूरिताः सन्तः ततः जग्मुर्य्यतः कात्यायनी

मच्छिवाःपिशितेनवः २६ यतोनियुक्तोदौत्येनतयादेव्याशिवःस्वयम् ॥ शिवदूतीतिलोकेस्मिं स्ततःसाख्यातिमागता २७ तेपिश्रुत्वावचोदेव्याः शर्व्वाख्यातंमहासुराः ॥ अमर्षापूरिताज ग्मुर्यतःकात्यायनीस्थिता २८ ततःप्रथममेवाग्रेशरशक्त्यृष्टिवृष्टिभिः ॥ ववर्षुरुद्धतामर्षास्तांदे वीममरारयः २९ साचतान्प्रहितान्बाणाञ्छूलशक्तिपरश्वधान् ॥ चिच्छेदलीलयाध्मातधनुर्मुक्तै

स्थिता भवति शर्व्वेण आख्यातं शर्व्वाख्यातं तत् शर्व्वाख्यातं शर्व्वेण शिवेन आख्यातं कथितं वचः वाक्यं ते प्रसिद्धाः महासुराः महादैत्याः अमर्षेण आपूरिताः अमर्षापूरिताः अमर्षेण क्रोधेन आपूरिताः व्याप्ताः ततः तं देशं तं कं यतः यं देशं कात्यायनी देवी २८ तत इति हे राजन् ! ततः अमरारयः उद्धतामर्षाः सन्तः प्रथमं एव अग्रे तां देवीं शरशक्त्यृष्टिवृ ष्टिभिः ववर्षुः ततः तदनन्तरं देवीनिकटगमनानन्तरं अमराणां अरयः अमरारयः अमराणां देवानां अरयः शत्रवः
दैत्याः उद्धतः अमर्षो येषां ते उद्धतामर्षाः उद्धतः वर्द्धितः अमर्षः क्रोधः प्रथमं एव पूर्व्वमेव अग्रे सन्मुखे तां प्रसिद्धां १२६

शराश्च शक्तयश्च ऋष्टयश्च ताः शरशक्त्यृष्टयः शरशक्त्यृष्टीनां वृष्टयः शरशक्त्यृष्टिवृष्टयः ताभिः शरशक्त्यृष्टिवृष्टिभिः शराः बाणाः ऋष्टयः एकधारखड्गाः २६ सेति हे राजन्! सा लीलया आध्मातधनुर्म्मुक्तैः महेषुभिः प्रहितान् तान् बाणान् किञ्च शूल शक्ति परश्वधान् चिच्छेद सा चण्डिका लीलया अनायासेन आध्मातं च तत् धनुश्च आध्मातधनुः आध्मात धनुषः मुक्ताः आध्मात धनुर्म्मुक्ताः तैः आध्मात धनुर्म्मुक्तैः आध्मातं स शब्दं धनुः कार्म्मुकं मुक्ताः प्रेरिताः महान्तश्च ते इषवश्च महेषवः तैः महेषुभिः इषवः बाणाः प्रहितान् प्रक्षिप्तान् तान् प्रसिद्धान् शूलं च शक्तिश्च परश्वधश्च ते

महेषुभिः ३० तस्याग्रतस्तथाकालीशूलपातविदारितान्॥ खट्वाङ्गपोथितांश्चारीन्कुर्व्वतीव्यचरत्तदा ३१ कमण्डलुजलाक्षेपहतवीर्य्यान्हतौजसः॥ब्रह्माणीचाकरोच्छत्रून्येनयेनस्मधावति३२

शूलशक्तिपरश्वधाः तान् शूलशक्तिपरश्वधान् शूलं त्रिशूलं परश्वधः कुठारः ३० तस्या इति हे राजन्! तस्याः अग्रतः तथा तदा काली शूलपातविदारितान् किञ्च खट्वाङ्गपोथितान् अरीन् कुर्व्वती सती व्यचरत् तस्याः कौशिक्याः अग्रतः अग्रे छान्दसः सन्धिः तथा चण्डीवत् तदा तस्मिन् देव्या शस्त्रच्छेदे काली ललाटजा देवी शूलेनपातः शूलपातः शूलपातेन विदारिताः शूलपातविदारिताः तान् शूलपातविदारितान् शूलेन त्रिशूलेन पातः प्रहारः विदारिताः मारिताः खट्वाङ्गेनपोथिताः खट्वाङ्गपोथिताः तान् खट्वाङ्गपोथितान् खट्वाङ्गेन नरास्थिपंजरेण पोथिताः प्रहारिताः अरीन् शत्रून् दैत्यान् करोतीति कुर्व्वती करोति भक्षणं करोति ३१ कमण्डल्विति हे राजन्! ब्रह्माणी शत्रून् कमण्डलुजलाक्षेप हतवीर्य्यान्

हतौजसःअकरोत् किञ्च शत्रवः येनयेन धावन्तिस्मतेन तेन साधावतिस्म कमण्डलोः जलं कमण्डलु जलं कमण्डलुजल
स्य आक्षेपः कमण्डलुजलाक्षेपः कमण्डलुजलाक्षेपेणहतंवीर्य्यं येषां ते कमण्डलुजलाक्षेपहतवीर्य्याः तान् कमण्डलुजला
क्षेपहतवीर्य्यान् आक्षेपः प्रक्षेपः हतं नष्टं वीर्य्यं बलं हतं ओजो येषां ते हतौजसः तान् हतौजसः हतं नष्टं ओजः पराक्रमः
शत्रवः दैत्याः येन येन मार्ग्गेण तेन तेन मार्ग्गेण सा ब्रह्माणी ३२ माहेश्वरीति हे राजन्! माहेश्वरी त्रिशूलेन दैत्यान् जघान
तथा वैष्णवी चक्रेण दैत्यान् जघान तथा अतिकोपना कौमारी शक्त्या दैत्यान् जघान माहेश्वरी महेश्वर सम्बन्धिनी

माहेश्वरीत्रिशूलेनतथाचक्रेणवैष्णवी ॥ दैत्यान्जघानकौमारीतथाशक्त्यातिकोपना ३३ ऐन्द्री
कुलिशपातेनशतशोदैत्यदानवाः ॥ पेतुर्विदारिताःपृथ्व्यांरुधिरौघप्रवर्षिणः ३४ तुण्डप्रहारवि
ध्वस्तादंष्ट्राग्रक्षतवक्षसः ॥ वाराहमूर्त्यान्यपतंश्चक्रेणचविदारिताः ३५ नखैर्विदारितांश्चान्यान्भक्ष

शक्तिः वैष्णवी विष्णुसम्बन्धिनी शक्तिः अतिकोपनोऽस्ति यस्याः सा अतिकोपना अतिकोपनः अतिक्रोधनः कौमारी कुमार
सम्बन्धिनी शक्तिः ३३ ऐन्द्रीति हे राजन्! ऐन्द्रीकुलिशपातेन विदारिताः शतशः दैत्यदानवाः रुधिरौघ प्रवर्षिणः
सन्तः पृथ्व्यां पेतुः ऐन्द्र्याः कुलिशं ऐन्द्रीकुलिशं ऐन्द्री कुलिशस्यपातः ऐन्द्रीकुलिशपातः तेन ऐन्द्रीकुलिशपातेन
ऐन्द्र्याः इन्द्राण्याः कुलिशं वज्रं पातः प्रक्षेपः विदारिताः प्रहारिताः दैत्याश्च दानवाश्च ते दैत्यदानवाः रुधिराणां ओघः
रुधिरौघः रुधिरौघं प्रवर्षितुं शीलं येषां ते रुधिरौघप्रवर्षिणः ओघः समूहः शीलं स्वभावः पृथ्व्यां भूमौ पेतुः पतिताः ३४ 

तुण्डेति हे राजन्! वाराहमूर्त्त्यां केचित् दैत्याः तुण्डप्रहारविध्वस्ताः सन्तः भूमौ न्यपतन् केचित् दैत्याः दंष्ट्राग्रक्षतवक्षसः सन्तः भूमौन्यपतन् किंच केचित् दैत्याः चक्रेण विदारिताः सन्तः भूमौ न्यपतन् वाराही चासौ मूर्त्तिश्च वाराहमूर्त्तिः तया वाराहमूर्त्त्यां देव्या तुण्डेन प्रहारः तुण्डप्रहारः तुण्डप्रहारेण विध्वस्ताः तुण्डप्रहारविध्वस्ताः तुण्डेन मुखेन विध्वस्ताः नाशिताः दंष्ट्रायाः अग्रं दंष्ट्राऽग्रं दंष्ट्राग्रेण क्षतं वक्षो येषां ते दंष्ट्राग्रक्षतवक्षसः अग्रं अग्रभागः क्षतं विदीर्णं वक्षः वक्षस्स्थलं विदारिताः प्रहारिताः भूमौ पृथिव्यां न्यपतन् पतिताः ३५ नखैरिति हे राजन्! आजौ नादापूर्णदिगम्बरा

यन्तीमहासुरान् ॥ नारसिंहीचचाराजौनादापूर्णदिगम्बरा ३६ चण्डाट्टहासैरसुराःशिवदूत्यभि
दूषिताः॥ पेतुःपृथिव्यांपतितांस्तांश्चखादाथसातदा ३७इतिमातृगणंक्रुद्धंमर्दयन्तमहासुरान्॥

नारसिंही नखैः विदारितान् अन्यान् महासुरान् भक्षयन्ती सती चचार आजौ संग्रामे दिक् च अम्बरं च दिगम्बरे नादेन आपूर्णे दिगम्बरे यया सा नादापूर्णदिगम्बरा दिक् दिशा अम्बरं आकाशं नादेन शब्देन आपूर्णे व्याप्ते नारसिंही नृसिंहसम्बन्धिनी शक्तिः विदारितान प्रहारितान् महासुरान् महादैत्यान् ३६ चण्डेति हे राजन्! चंडाट्टहासैः शिवदूत्यभिदूषिताः असुराः पृथिव्यां पेतु अथ सा तदा पतितान् तान् चखाद अट्टाश्च ते हासाश्च अट्टहासाः चण्डाश्च ते अट्टहासाश्च चण्डाट्टहासाः तैः चण्डाट्टहासैः अट्टाः महान्तः चण्डाः उत्कटाः शिवदूत्या अभिदूषिताः शिवदूत्याभिदूषिताः अभिदूषिताः प्रापित मूर्च्छाः असुराः दैत्याः पृथिव्यां भूमौ पेतुः पतिताः अथ अथेत्यनन्तरं दैत्य पतनान्तरं सा शिव

 दूती तदा तस्मिन् काले तान् दैत्यान् चखाद भक्षितवती ३७ इतीति हे राजन्! इति विविधैः अभ्युपायैः महासुरान् अ०
 मर्दयन्तं क्रुद्धं मातृगणं दृष्ट्वा देवारिसैनिकाः नेशुः इति पूर्वोक्तैः विविधैः अनेकैः अभ्युपायैः संग्रामसाधनैः महासुरा ८
न् महादैत्यान् मर्दयतीति मर्दयन् तं मर्दयन्तं क्रुद्धं क्रोधयुक्तं मातॄणांगणः मातृगणः तं मातृगणं मातॄणां ब्रह्माण्या
दीनां गणः समूहः देवानां अरयः देवारयः देवारीणां सैनिकाः देवारिसैनिकाः देवानां इन्द्रादीनां अरयः शत्रवः दैत्याः
नेशुः पलायिताः ३८ पलायनेति हे राजन्! मातृगणार्दितान् दैत्यान् पलायनपरान् दृष्ट्वा महासुरः रक्तबीजः क्रुद्धः

दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ३८ पलायनपरान्दृष्ट्वादैत्यान्मातृगणार्दितान् ॥ योद्धु
मभ्याययौक्रुद्धोरक्तबीजोमहासुरः ३९ रक्तबिन्दुर्यदाभूमौपतत्यस्यशरीरतः ॥ समुत्पततिमेदि
न्यास्तत्प्रमाणस्तदासुरः ४० युयुधेसगदापाणिरिन्द्रशक्त्यामहासुरः ॥ ततश्चैन्द्रीस्ववज्रेणर

सन् योद्धुं अभ्याययौ मातॄणांगणः मातृगणः मातृगणेन अर्दिताः मातृगणार्दिताःतान् मातृगणार्दितान् मातॄणां ब्रह्मा
ण्यादीनां गणः समूहः अर्दिताः पीडिताः पलायनेपराः पलायनपराः तान् पलायनपरान् पराः तत्पराः महासुरः म
हादैत्यः रक्तंबीजं यस्यसः रक्तबीजः बीजं कारणं अभ्याययौ आगतः ३९ तदेवाह रक्तेति हे राजन्! यदा अस्य शरीरतः
रक्तबिन्दुः भूमौपतति तदा तत्प्रमाणः असुरः मेदिन्याः समुत्पतति अस्य रक्तबीजस्य शरीरादिति शरीरतः रक्तस्य
बिन्दुः रक्तबिन्दुः तत्प्रमाणः सएव प्रमाणं यस्यसः तत्प्रमाणः सएव रक्तबीज एव असुरः दैत्यः मेदिन्याः मेदिनी आ 

श्रित्य समुत्पतति उत्तिष्ठतीत्यर्थः ४० युयुधे इति हे राजन् ! महासुरः सः गदापाणिस्सन् इन्द्रशक्त्या सह युयुधे ततः ऐन्द्री स्ववज्रेण रक्तबीजं अताडयत् महासुरः महादैत्यः सः रक्तबीजः गदापाणौ यस्यसः गदापाणिः पाणौहस्ते इन्द्रस्य शक्तिः इन्द्रशक्तिः तया इन्द्रशक्त्या ततः तदनन्तरं युद्धप्रारम्भानन्तरं ऐन्द्री इन्द्रसम्बन्धिनी शक्तिः स्वस्यवज्रं स्ववज्रं तेन स्ववज्रेण ४१ कुलिशेनेति हे राजन् ! आशुकुलिशेन आहतस्य शोणितं सुस्राव ततः तद्रूपाः तत्पराक्रमाः योधाः समुत्तस्थुः आशुशीघ्रं कुलिशेन वज्रेण आहतस्य ताडितस्य तस्य रक्तबीजस्य शोणितं रुधिरं ततः तदनन्तरं रु



क्तबीजमताडयत् ४१ कुलिशेनाहतस्याशुबहुसुस्रावशोणितम् ॥ समुत्तस्थुस्ततोयोधास्तद्रूपा स्तत्पराक्रमाः ४२ यावन्तःपतितास्तस्यशरीराद्रक्तबिन्दवः ॥ तावन्तःपुरुषाजातास्तद्वीर्य्यबल विक्रमाः ४३ तेचापियुयुधुस्तत्रपुरुषारक्तसम्भवाः ॥ समम्मातृभिरत्युग्रंशस्त्रपातातिभीषणम् ४४

धिरस्रावानन्तरं तद्रूपाः रक्तबीजरूपाः तत्पराक्रमाः रक्तबीजपराक्रमाः समुत्तस्थुः उत्थितवन्तः ४२ यावन्त इति हे राजन् ! तस्य शरीरात् यावन्तः रक्तबिन्दवः पतिताः तावन्तः तद्वीर्य्यबलविक्रमाः पुरुषाः जाताः तस्य रक्तबीजस्य शरीरात् देहात् यावन्तः यावत् संख्याकाः रक्तस्य बिन्दवः रक्तबिन्दवः तावन्तः तावत् संख्याकाः वीर्यं च बलं च विक्रमश्चते वीर्य्यबलविक्रमाः तस्य वीर्य्यबलविक्रमा इव वीर्य्यबलविक्रमाः येषांते तद्वीर्य्यबल विक्रमाः वीर्य्यं प्रभावः बलं शारीरं विक्रमः पराक्रमः उत्साहरूपः तस्य रक्तबीजस्य ४३ तेइति हे राजन् ! रक्तसम्भवाः ते पुरुषाः अपितत्र मा

तृभिः समं अत्युग्रं शस्त्रपातातिभीषणं यथा स्यात्तथा युयुधुः रक्तात्सम्भवो येषांते रक्तसम्भवाः रक्तात् रुधिरात् सम्भवः प्रादुर्भावः ते प्रसिद्धाः तत्र तस्मिन् संग्रामे मातृभिः ब्राह्मयादिभिः समं सह शस्त्राणां पातः शस्त्रपातः शस्त्रपातेन अतिभीषणं शस्त्रपातातिभीषणं पातः प्रक्षेपः अतिभीषणं अतिभयङ्करम् ४४ पुनश्चेति हे राजन् ! पुनः यदा वज्रपातेन क्षतं अस्य शिरः रक्तं ववाह तदा ततः सहस्रशः पुरुषाः जाताः वज्रस्य पातः वज्रपातः तेन वज्रपातेन पातः प्रक्षेपः क्षतं विदीर्णं अस्य रक्तबीजस्य शिरः मस्तकं रक्तं रुधिरं ततः रक्तात् ४५ वैष्णवीति हे राजन् ! समरे वैष्णवी

पुनश्चवज्रपातेनक्षतमस्याशिरोयदा॥ ववाहरक्तंपुरुषास्ततोजाताःसहस्रशः ४५ वैष्णवीसमरेचैनंचक्रेणाभिजघानह ॥ गदयाताडयामासऐन्द्रीतमसुरेश्वरम् ४६ वैष्णवीचक्रभिन्नस्यरुधिरस्रावसम्भवैः ॥ सहस्रशोजगद्व्याप्तंतत्प्रमाणैर्महासुरैः ४७ शक्त्याजघानकौमारीवाराहीचतथा

एनं चक्रेण अभिजघान किंच ऐन्द्री असुरेश्वरं तं गदया ताडयामास समरे संग्रामे वैष्णवी विष्णुसम्बन्धिनी शक्तिः एनं रक्तबीजं ऐन्द्री इन्द्रसम्बन्धिनी शक्तिः असुराणां ईश्वरः असुरेश्वरः तं असुरेश्वरं असुराणां दैत्यानां ईश्वरः स्वामी तं रक्तबीजम् ४६ वैष्णवीति हे राजन् ! वैष्णवीचक्रभिन्नस्य तस्य रुधिरस्रावसम्भवैः तत्प्रमाणैः सहस्रशः महासुरैः जगत् व्याप्तं वैष्णव्याः चक्रं वैष्णवीचक्रं तेन भिन्नः वैष्णवीचक्रभिन्नः तस्य वैष्णवीचक्रभिन्नस्य भिन्नः विदीर्णः तस्य रक्तबीजस्य रुधिरस्य स्रावः रुधिरस्रावः रुधिरस्रावात् सम्भवो येषां ते रुधिरस्रावसम्भवाः तैः रुधिरस्रावसम्भवैः

 स्रावः प्रवाहः सम्भवः प्रादुर्भावः सएव प्रमाणं येषां ते तत्प्रमाणाः तैः तत्प्रमाणैः स एव रक्तबीज एव महासुरैः महादैत्यैः ४७ शक्त्येति हे राजन्! कौमारी महासुरं रक्तबीजं शक्त्या जघान तथा च वाराही असिना जघान माहेश्वरी त्रिशूलेन जघान कौमारी कुमारसम्बन्धिनी शक्तिः महासुरं महादैत्यं वाराही वराहसम्बन्धिनी शक्तिः असिना खड्गेन माहेश्वरी महेश्वरसम्बन्धिनी शक्तिः ४८ सचापीति हे राजन्! कोपसमाविष्टः महासुरः दैत्यः स रक्तबीजः सर्व्वा एव मातृः पृथक् गदया अहनत् कोपेन समाविष्टः कोपसमाविष्टः कोपेन क्रोधेन समाविष्टः युक्तः महांश्चासौ असुरश्च 

सिना॥माहेश्वरीत्रिशूलेनरक्तबीजंमहासुरम् ४८ सचापिगदयादैत्यस्सर्व्वाएवाहनत्पृथक्॥ मातृःकोपसमाविष्टोरक्तबीजोमहासुरः ४९ तस्याहतस्यबहुधाशक्तिशूलादिभिर्भुवि॥ पपातयोवै रक्तौघस्तेनासञ्छतशोसुराः ५० तैश्चासुरासृक्सम्भूतैरसुरैःसकलञ्जगत्॥ व्याप्तमासीत्ततोदे

महासुरः दितेः अपत्यं पुमान् दैत्यः सः प्रसिद्धः सर्व्वा एव समस्ता एव पृथक् पृथक् ४९ तस्येति हे राजन्! आहतस्य तस्य शक्तिशूलादिभिः बहुधा यः रक्तौघः वै भुवि पपात तेन शतशः असुराः आसन् आहतस्य ताडितस्य तस्य रक्तबीजस्य शक्तिश्च शूलं च शक्तिशूले शक्तिशूले आदिर्येषां ते शक्तिशूलादयः तैः शक्तिशूलादिभिः बहुधा अनेकविधैः रक्तानां ओघः रक्तौघः रक्तानां रुधिराणां ओघः समूहः वै इति निश्चयेन भुवि पृथिव्यां तेन रक्तौघेन असुराः दैत्याः आसन् बभूवुः ५० तैश्चेति हे राजन्! सकलं जगत् असुरासृक्सम्भूतैः तैः असुरैः व्याप्तं आसीत् ततः देवाः उत्तमं भयं 

आजग्मुः सकलं समस्तं असुरस्य असृक् असुरासृक् असुरासृजः सम्भूताः असुरासृक्सम्भूताः तैः असुरासृक्सम्भूतैः
असुरस्य दैत्यस्य रक्तबीजस्य असृक् रुधिरं सम्भूताः उत्पन्नाः तैः प्रसिद्धैः असुरैः दैत्यैः ततः तदनन्तरं असुरव्याप्त
जगदवलोकनानन्तरं देवाः इन्द्रादयः उत्तमं निरतिशयं भयं त्रासं आजग्मुः प्रापुः ५१ तानिति हे राजन्! तान् विष
ण्णान् दृष्ट्वा सत्वरा चण्डिका सुरान् प्राह हे सुराः! यूयं माविषीदत एवं सुरान् आश्वास्य कालीं इति उवाच इतीति
किं हे चामुण्डे! त्वं वदनं विस्तरं कुरु तान् सुरान् विषण्णान् भयाकुलान् सत्वरा त्वरा सहिता सुरान् देवान् प्राह

वाभयमाजग्मुरुत्तमम् ५१ तान्विषण्णान्सुरान्दृष्ट्वाचण्डिकाप्राहसत्वरा ॥ उवाचकालींचामुण्डे
विस्तरंवदनंकुरु ५२ मच्छस्त्रपातसम्भूतान्रक्तबिन्दून्महासुरान् ॥ रक्तबिन्दोःप्रतीच्छत्वंव
क्त्रेणानेनवेगिता ५३ भक्षयन्तीचररणेतदुत्पन्नान्महासुरान् ॥ एवमेषक्षयंदैत्यःक्षीणरक्तोगमि

उवाच एवं अनेनप्रकारेण सुरान् देवान् आश्वास्य समाधानं कृत्वा वदनं मुखं विस्तरं विस्तारयन् ५२ मच्छस्त्रेति
हे चामुण्डे! त्वं वेगिता सती अनेन वक्त्रेण रक्तबिन्दोः जातान् महासुरान् किञ्च मच्छस्त्रपातसम्भूतान् रक्तबिन्दून्
भूमिं अप्राप्तान् एवं प्रतीच्छ वेगिता सती वेगवती सती वक्त्रेण मुखेन रक्तस्य बिन्दुः रक्तबिन्दुः तस्मात् रक्तबिन्दोः
जातान् उत्पन्नान् महासुरान् महादैत्यान् मम शस्त्रं मच्छस्त्रं मच्छस्त्रस्य पातः मच्छस्त्रपातः मच्छस्त्रपातेन सम्भूताः
मच्छस्त्रपातसम्भूताः तान् मच्छस्त्रपातसम्भूतान् पातः प्रक्षेपः सम्भूताः जाताः रक्तस्य बिन्दवः रक्तबिन्दवः तान् १३५

रक्तबिन्दून् भूमिं पृथिवीं प्रतीच्छ गृहाण ५३ भक्षयन्तीति हे चामुण्डे ! त्वं तदुत्पन्नान् महासुरान् भक्षयन्ती सती रणे चर एवं एषः दैत्यः क्षीणरक्तः सन् क्षयं गमिष्यति तस्मात् उत्पन्नाः तदुत्पन्नाः तान् तदुत्पन्नान् तस्मात् त्वद्वक्त्रात् उत्पन्नाः जाताः समये जातान् महासुरान् महादैत्यान् रणे संग्रामे चर विचर एवं प्रकारेण क्षीणं रक्तं यस्य सः क्षीणरक्तः रक्तं रुधिरं क्षयं नाशं गमिष्यति प्राप्स्यति ५४ भक्ष्यमाणाइति हे चामुण्डे त्वया भक्ष्यमाणाः उग्राः अपरे न च उत्पत्स्यन्ति इति तां उक्त्वा ततः देवीशूलेन तं अभिजघान भक्ष्यन्ते इति भक्ष्यमाणाः उग्राः महान्तः अपरे अन्ये दै

ष्यति ५४ भक्ष्यमाणास्त्वयाचोग्रानचोत्पत्स्यन्तिचापरे ॥ इत्युक्त्वातांततोदेवीशूलेनाभिजघान तम् ५५ मुखेनकालीजगृहेरक्तबीजस्यशोणितम् ॥ ततोसावाजघानाथगदयातत्रचण्डिकाम् ५६ नचास्यावेदनांचक्रेगदापातोल्पिकामपि ॥ तस्याहतस्यदेहात्तुबहुसुस्रावशोणितम् ५७ यत

त्या इति अनेन प्रकारेण तां कालीं उक्त्वा कथयित्वा ततः तदनन्तरं कथनानन्तरं तं रक्तबीजं अभिजघान ताडयामास ५५ मुखेनेति हे राजन् ! कालीमुखेन रक्तबीजस्य शोणितं जगृहे ततः अथ असौ तत्र चण्डिकां गदया आजघान शोणितं रुधिरं जगृहे गृहाण ततः तदनन्तरं शोणितग्रहणानन्तरं अथ अथच असौ रक्तबीजः तत्र तस्मिन् संग्रामे आजघान ताडयामास ५६ न चेति हे राजन् ! गदापातः अस्याः अल्पिकां अपि वेदनां नच चक्रे आहतस्य तस्य देहात् तु बहु शोणितं सुस्राव गदायाः पातः गदापातः पातः प्रक्षेपः अस्याः चण्डिकायाः अल्पिकां स्वल्पां वेदनां पीडां नच चक्रे नैव

कृतवान् आहतस्य ताडितस्य तस्य रक्तबीजस्य देहात् शरीरात् बहु अनेकं शोणितं रुधिरम् ५७ यतस्तत इति हे रा जन्! तत् यतः ततः अस्याः वक्त्रेण रक्तपातात् ये महासुराः समुद्गताः तान् चामुण्डा मुखेन संप्रतीच्छति किंच चखा द तत् तस्मात् कारणात् यतः ततः सर्व्वतः इत्यर्थः अस्याः काल्याः वक्त्रेण मुखेन रक्तस्यपातः रक्तपातः तस्मात् रक्त पातात् रक्तस्य रुधिरस्य पातः पतनं ये महासुराः महादैत्याः समुद्गताः जाताः तान् महादैत्यान् संप्रतीच्छति गृह्णा ति चखाद भक्षितवती अथ चामुण्डा तस्य शोणितं पपौ अथ अथवा तस्य रक्तबीजस्य शोणितं रुधिरं देवी शूलेन व



स्ततस्तद्वक्त्रेणचामुण्डासम्प्रतीच्छति ॥ मुखेसमुद्गतायेस्यारक्तपातान्महासुराः ५८ तांश्च
खादाथचामुण्डापपौतस्यचशोणितम् ॥ देवीशूलेनवज्रेणबाणैरसिभिऋष्टिभिः ५९ जघानर
क्तबीजंतंचामुण्डापीतशोणितम् ॥ सपपातमहीपृष्ठेशस्त्रसङ्घसमाहतः ६० नीरक्तश्चमहीपालर

ज्रेण बाणैः असिभिः ऋष्टिभिः चामुण्डापीतशोणितं तं रक्तबीजं जघान असिभिः खड्गैः ऋष्टिभिः उभयतोधारख ड्गैः चामुण्डया पीतं शोणितं यस्य सः चामुण्डापीतशोणितः तं चामुण्डापीतशोणितं तं प्रसिद्धं हे महीपाल! शस्त्र सङ्घसमाहतः महासुरः रक्तबीजः नीरक्तः सन् महीपृष्ठे पपात महीं पालयतीति महीपालः तत्सम्बोधने हे महीपाल! हे राजन्! शस्त्राणां सङ्घः शस्त्रसङ्घः शस्त्रसङ्घेन समाहतः शस्त्रसङ्घसमाहतः सङ्घः समूहः समाहतः ताडितः महासुरः म हादैत्याः सः प्रसिद्धः निर्गतं रक्तं यस्मात् सः नीरक्तः रक्तं रुधिरं महीपृष्ठे पृथिवीतले पपात पातितः हे नृप! ततः ते त्रि

दशाः अतुलं हर्षं अवापुः हे नृप ! हे राजन् ! ततः तदनन्तरं रक्तबीजवधानन्तरं ते प्रसिद्धाः त्रिदशाः देवाः अतुलं महान्तं
हर्षं आनन्दं अवापुः प्रापुः ५८ । ५९ । ६० । ६१ तेषामिति हे राजन् ! मातृगणः तेषां असृङ्मदोद्धतः जातः सन् ननर्त्त
मातॄणां गणः मातृगणः मातॄणां ब्राह्मयादीनां गणः समूहः तेषां असुराणां असृजामदः असृङ्मदः तेन उद्धतः असृङ्म
दोद्धतः असृजा रुधिरेण ६२ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेरक्तबीजवधोनामाष्टमोऽध्यायः ८ ॥

क्तबीजोमहासुरः ॥ ततस्तेहर्षमतुलमवापुस्त्रिदशानृप ६१ तेषांमातृगणोजातोननर्त्तासृङ्मदो
द्धतः ६२ ॥ इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरे देवीमाहात्म्येरक्तबीजवधोनामाष्ट
मोऽध्यायः ८ ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

राजोवाच ॥ विचित्रमिदमाख्यातंभगवन्भवताामम ॥ देव्याश्चरितमाहात्म्यंरक्तबीजवधाश्रि
तम् १ भूयश्चेच्छाम्यहंश्रोतुंरक्तबीजेनिपातिते ॥ चकारशुम्भोयत्कर्म्मनिशुम्भश्चातिकोपनः २

राजोवाच ॥ विचित्रमिति हे भगवन् ! भवता मम रक्तबीजवधाश्रितं इदं देव्याः चरितमाहात्म्यं विचित्रं आख्या
तं मम मह्यं रक्तबीजस्य वधः रक्तबीजवधः रक्तबीजवधस्य आश्रितं रक्तबीजवधाश्रितं आश्रितं जनकं चरितं च मा
हात्म्यं च अनयोः समाहारः चरितमाहात्म्यं चरितं कर्म्म माहात्म्यं प्रभावः विचित्रं आश्चर्य्यकारकं आख्यातं कथि
तम् १ भूयश्चेति हे भगवन् ! रक्तबीजे निपातिते सति अतिकोपनः शुम्भः किञ्च निशुम्भः यत् कर्म चकार तत् कर्म्म अहं

 भूयः श्रोतुं इच्छामि निपातिते सति प्रहारिते सति अतिकोपनः अतिक्रुद्धः भूयः पुनः २ ॥ ऋषिरुवाच ॥ चकारेति 
हे राजन्! आहवे रक्तबीजे निपातिते सति किञ्च अन्येषु हतेषु सत्सु शुम्भासुरः किञ्च निशुम्भः अतुलं कोपं चकार आ
हवे संग्रामे निपातिते सति प्रहारिते सति अन्येषु धूम्रलोचनादिषु दैत्येषु हतेषु सत्सु प्रहारितेषु सत्सु अतुलं महान्तं
कोपं क्रोधं चकार कृतवान् ३ हन्यमानमिति हे राजन्! महासैन्यं हन्यमानं विलोक्य अथ अमर्षं उद्वहन् मुख्यया अ
सुरसेनया उपलक्षितः निशुम्भः अभ्यधावत् महच्च तत् सैन्यश्च महासैन्यं हन्यते इति हन्यमानं विलोक्य दृष्ट्वा अथ

ऋषिरुवाच ॥ चकारकोपमतुलंरक्तबीजेनिपातिते ॥ शुम्भासुरोनिशुम्भश्चहतेष्वन्येषुचाह
वे ३ हन्यमानंमहासैन्यंविलोक्यामर्षमुद्वहन् ॥ अभ्यधावन्निशुम्भोऽथमुख्ययाऽसुरसेनया ४
तस्याग्रतस्तथापृष्ठेपार्श्वयोश्चमहासुराः ॥ सन्दष्टौष्ठपुटाःक्रुद्धाहन्तुंदेवीमुपाययुः ५ आजगाम

अथच अमर्षं क्रोधं उद्वहन् धारयन् मुख्यया प्रधानभूतया असुरसेनया असुराणां सेना असुरसेना तया असुरसेनया
असुराणां दैत्यानां उपलक्षितः सहितः अभ्यधावत् अभिमुखं ययौ ४ तस्येति हे राजन्! तस्य अग्रतः तथा पृष्ठे किञ्च
पार्श्वयोः महासुराः देवीं हन्तुं उपाययुः कथम्भूताः महासुराः सन्दष्टौष्ठपुटाः पुनः कथम्भूताः महासुराः क्रुद्धाः तस्य निशुम्भ
स्य अग्रतः अग्रे पार्श्वयोः भुजप्रान्तयोः महासुराः महादैत्याः हन्तुं प्रहर्तुं उपाययुः जग्मुः ओष्ठानां पुटाः ओष्ठपुटाः स
न्दष्टाः ओष्ठपुटाः यैः ते सन्दष्टौष्ठपुटाः सन्दष्टाः दन्ताभ्यां पीडिताः क्रुद्धाः क्रोधयुक्ताः ५ आजगामेति हे राजन्! स्वबलैःवृतः 

महावीर्य्यःशुम्भः अपि मातृभिः सह युद्धं कृत्वा कोपात्तु चण्डिकां निहन्तुं आजगाम स्वस्य बलानि स्वबलानि तैः
स्वबलैः स्वस्य स्वकीयस्य बलानि सैन्यानि वृतः युक्तः महत् वीर्य्यं यस्य सः महावीर्य्यः वीर्य्यं पराक्रमः मातृभिः
काल्यादिभिः युद्धं संग्रामं कोपात् क्रोधात् चण्डिकां देवीं निहन्तुं प्रहर्तुं आजगाम ययौ ६ तत इति हे राजन् ! ततः
शुम्भनिशुम्भयोः देव्यासह अतीव युद्धं आसीत् कथम्भूतं युद्धं शरवर्षं कयोः इव अतीव उग्रं जलं वर्षतोः मेघयोः
इव ततः तदनन्तरं शुम्भागमनानन्तरं शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः अतीव अत्यन्तमेव

महावीर्य्यःशुम्भोऽपिस्वबलैर्वृतः ॥ निहन्तुंचण्डिकांकोपात्कृत्वायुद्धन्तुमातृभिः ६ ततोयुद्धम
तीवासीद्देव्याःशुम्भनिशुम्भयोः ॥ शरवर्षमतीवोग्रंमेघयोरिववर्षतोः ७ चिच्छेदास्ताञ्छरांस्ता
भ्यांचण्डिकास्वशरोत्करैः ॥ ताडयामासचाङ्गेषुशस्त्रौघैरसुरेश्वरौ ८ निशुम्भोनिशितंखड्गंचर्म्म

युद्धं संग्रामः आसीत् बभूव शराणां वर्षा यस्मिन् तत् शरवर्षं शराणां बाणानां वर्षा वृष्टिः अतीव अत्यन्तमेव
उग्रं महत् वर्षतः इति वर्षन्तौ तयोः वर्षतोः ७ चिच्छेदेति हे राजन् ! चण्डिका स्वशरोत्करैः ताभ्यां अस्तान् श-
रान् चिच्छेद किञ्च शस्त्रौघैः अङ्गेषु असुरेश्वरौ ताडयामास चण्डिका देवी स्वस्यशराः स्वशराः स्वशराणां उत्कराः
स्वशरोत्कराः तैः स्वशरोत्करैः स्वस्य स्वकीयस्य शराः बाणाः उत्कराः समूहाः ताभ्यां शुम्भनिशुम्भाभ्यां अस्तान्
क्षिप्तान् शरान् बाणान् शस्त्राणां ओघाः शस्त्रौघाः तैः शस्त्रौघैः शस्त्राणां बाणानां ओघाः समूहाः अङ्गेषु अवयवेषु

दु०टी० हस्तपादादिषु असुराणां ईश्वरौ असुरेश्वरौ तौ असुरेश्वरौ ८ निशुम्भेति हे राजन्! निशुम्भः निशितं खड्गं किञ्च अ०
१४० सुप्रभं चर्म्म आदाय मूर्ध्नि देव्याः उत्तमं वाहनं सिंहं अताडयत् निशितं तीक्ष्णं खड्गं असिं सुप्रभं दीप्यमानं चर्म्म ६
फलकं आदाय गृहीत्वा मूर्ध्नि मस्तके उत्तमं श्रेष्ठं वाहनं वाहनभूतम् ६ ताडित इति हे राजन्! वाहने ताडिते सति
देवी आशु क्षुरप्रेण निशुम्भस्य उत्तमं असिं किञ्च अष्टचन्द्रकं अपि चर्म्म चिच्छेद वाहने सिंहे आशु शीघ्रं क्षुरप्रेण शर
विशेषेण उत्तमं श्रेष्ठं असिं खड्गं अष्टचन्द्रकं अष्टसंख्याकरत्नादिघटितं चन्द्राकारसहितं चर्म्मफलकम् १० ॥

चादायसुप्रभम्॥अताडयन्मूर्ध्नि सिंहंदेव्यावाहनमुत्तमम्६ताडितेवाहनेदेवीक्षुरप्रेणासिमुत्तमम्॥
निशुम्भस्याशुचिच्छेदचर्म्मचाप्यष्टचन्द्रकम् १० छिन्नेचर्म्मणिखड्गेचशक्तिंचिक्षेपसोसुरः ॥
तामप्यस्यद्विधाचक्रेचक्रेणाभिमुखागताम् ११ कोपाध्मातोनिशुम्भोथशूलंजग्राहदानवः ॥ आ

छिन्नइति हे राजन्! चर्म्माणि किञ्च खड्गे छिन्ने सति असुरः सः शक्तिं चिक्षेप देवी चक्रेण अस्य अभिमुखागतां अपि तां
द्विधाचक्रे चर्म्मणि फलके असुरः दैत्यः सः निशुम्भः अस्य निशुम्भस्य अभिमुखं आगता अभिमुखागता तां अभिमुखा
गतां अभिमुखं सन्मुखं आगता प्राप्ता तां शक्तिं द्विधा द्विभागं चक्रे कृतवती ११ कोपेति हे राजन्! अथ कोपाध्मातः
दानवः निशुम्भः शूलं जग्राह देवी मुष्टिपातेन आयान्तं अपि तत् अचूर्णयत् अथ अथेत्यनन्तरं शक्तिच्छिन्नानन्तरं कोपे
न आध्मातः कोपाध्मातः कोपेन क्रोधेन आध्मातः प्रज्वलितः शूलं त्रिशूलं मुष्टेः पातः मुष्टिपातः तेन मुष्टिपातेन पातः १४०

पतनं आयान्तम् आगच्छन्तं तत् शूलम् १२ आविध्येति हे राजन् ! अथ सः अपि गदां आविध्य चण्डिकां प्रति चिक्षेप देव्या
त्रिशूलेन भिन्ना अपि सा भस्मत्वं आगता अथ अथेत्यनन्तरम् शूलभेदनानन्तरम् सः निशुम्भः आविध्य भ्रामयित्वा
चण्डिकां देवीं भिन्ना पृथक्कृता खण्डीकृता सा गदा भस्मनः भावः भस्मत्वं भावः धर्मः आगता प्राप्ता १३ तत इति
हे राजन्! ततः देवी परशुहस्तं दैत्यपुङ्गवं आयान्तम् तंआहत्यबाणौघैः भूतले अपातयत ततःतदनन्तरम् गदाभेदनानन्तरं

यान्तंमुष्टिपातेनदेवीतच्चाप्यचूर्णयत् १२ आविध्याथगदांसोपिचिक्षेपचण्डिकांप्रति ॥ सापिदे
व्यात्रिशूलेनभिन्नाभस्मत्वमागता १३ ततःपरशुहस्तंतमायान्तंदैत्यपुङ्गवम् ॥ आहत्यदेवीबा
णौघैरपातयतभूतले १४ तस्मिन्निपतितेभूमौनिशुम्भेभीमविक्रमे ॥ भ्रातर्यतीवसंक्रुद्धःप्रययौ
हन्तुमम्बिकाम् १५ सरथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः ॥ भुजैरष्टाभिरतुलैर्व्याप्याशेषंबभौन

परशुर्हस्ते यस्य सः परशुहस्तः तं परशुहस्तं दैत्यानां पुङ्गवः दैत्यपुङ्गवः तं दैत्यपुङ्गवं पुङ्गवः श्रेष्ठः आयान्तं आगच्छन्तं
तं निशुम्भं आहत्य ताडयित्वा बाणानां ओघाः बाणौघाः तैः बाणौघैः ओघाः समूहाः भूतले पृथिव्याम् १४ तस्मिन्निति
हे राजन् ! भीमविक्रमे भ्रातरि तस्मिन् निशुम्भे भूमौ निपतिते सति अतीवसंक्रुद्धः सन् अम्बिकां हन्तुं प्रययौ भीमः
विक्रमो यस्य सः भीमविक्रमः तस्मिन् भीमविक्रमे भीमः महान् विक्रमः पराक्रमः भूमौ पृथिव्याम् निपतिते सति
प्रहारिते सति अतीव अत्यन्तमेव संक्रुद्धः क्रोधायमानः अम्बिकां देवीं हन्तुं प्रययौ आजगाम १५ सइति हे राजन् !

दु०टी० रथस्थः सः तथा अत्युच्चैः गृहीतपरमायुधैः अतुलैः अष्टाभिः भुजैः अशेषं नभः व्याप्य बभौ रथे तिष्ठतीति रथस्थः सः अ०
१४२ शुम्भं तथा सामुद्रिकोक्तप्रकारेण अत्युच्चैः महद्भिः परमाणि च तानि आयुधानि च परमायुधानि गृहीतानि परमायु ६
धानि यैस्ते गृहीतपरमायुधाः तैः गृहीतपरमायुधैः परमाणि उत्कृष्टानि आयुधानि शस्त्राणि अतुलैः तुलारहितैः, अ
शेषं समस्तं नभः आकाशं बभौ शुशुभे १६ तमायान्तमिति हे राजन् ! आयान्तम् तं समालोक्य देवी शङ्खंअवादयत्
किंच धनुषः अपि अतीवदुस्सहं ज्याशब्दं चकार आयान्तम् आगच्छन्तं तं शुम्भं समालोक्य दृष्ट्वा अवादयत् पूरयामास

भः १६ तमायान्तंसमालोक्यदेवीशङ्खमवादयत् ॥ ज्याशब्दंचापिधनुषश्चकारातीवदुःसहम् १७
पूरयामासककुभोनिजघण्टास्वनेनच ॥ समस्तदैत्यसैन्यानांतेजोवधविधायिना १८ ततःसिं

अतीव अत्यन्तमेव दुःसहं असह्यं ज्यायाः शब्दः ज्याशब्दः तं ज्याशब्दं ज्यायाः प्रत्यञ्चायाः शब्दः टंकाररवः चकार कृतव
ती१७पूरयामासेति हे राजन् ! किंच सा समस्तदैत्यसैन्यानां तेजोवधविधायिना निजघण्टास्वनेन ककुभः पूरयामा
स सा चण्डिका दैत्यानां सैन्यानि दैत्यसैन्यानि समस्तानि च तानि दैत्यसैन्यानि च समस्तदैत्यसैन्यानि तेषां स
मस्तदैत्यसैन्यानां तेजसः वधः तेजोवधः तेजोवधस्य विधायी तेजोवधविधायी तेन तेजोवधविधायिना वधः नाशः
विधायी कर्त्ता घण्टायाः स्वनः घण्टास्वनः निजश्चासौ घण्टास्वनश्च निजघण्टास्वनः तेन निजघण्टास्वनेन स्वनः
शब्दः निजः स्वकीयः ककुभः दिशः १८ तत इति हे राजन् ! ततः सिंहः त्याजितेभमहामदैः महानादैर्गगनं गां तथा १४२

दश उपदिशः पूरयामास ततः तदनन्तरं घण्टाशब्दश्रवणानन्तरं महांश्चासौ मदश्च महामदः इभानां महामदः इ भमहामदः त्याजितः इभमहामदो यैः ते त्याजितेभमहामदाः तैः त्याजितेभमहामदैः इभानां हस्तिनां त्याजितः दूरीकृतः महान्तश्च ते नादाश्च महानादाः तैः महानादैः नादाः शब्दाः गगनं आकाशं गां पृथिवीं उपदिक् सहिताः दिशः उपदिशः १९ तत इति हे राजन्! ततः काली समुत्पत्य गगनं क्ष्मां कराभ्यां अताडयत् तन्निनादेन प्राक् ते स्वनाः तिरोहिताः ततः तदनन्तरं पृथिव्याकाशशब्दव्याप्तानन्तरं काली चामुण्डा समुत्पत्य उत्पत्य गगनं आकाशं क्ष्मां पृथिवीं

होमहानादैस्त्याजितेभमहामदैः ॥ पूरयामासगगनंगान्तथोपदिशोदश १९ ततःकालीसमुत्प
त्यगगनंक्ष्मामताडयत् ॥ कराभ्यांतन्निनादेनप्राक्स्वनास्तेतिरोहिताः २० अट्टहासमशिवं
शिवदूतीचकारह ॥ तैःशब्दैरसुरास्त्रेसुःशुम्भःकोपंपरंययौ २१ दुरात्मंस्तिष्ठतिष्ठेतिव्याजहारा

कराभ्यां हस्ताभ्यां तस्यनिनादः तन्निनादः तेन तन्निनादेन तस्य ताडितस्य निनादः शब्दः प्राक् पूर्वं ते प्रसिद्धाः स्वनाः शब्दाः तिरोहिता आच्छादिताः २० अट्टहासमिति हे राजन् ! शिवदूती अशिवं अट्टहासं चकारह अट्टहासमित्यत्र 'शकन्ध्वादित्वात्पररूपम्' तैः शब्दैः असुराः त्रेसुः शुम्भः परं कोपं ययौ शिवदूती काली अशिवं रिपूणां भयदं तैः प्रसिद्धैः शब्दैः अट्टहासैः असुराः दैत्याः त्रेसुः भयभीताः बभूवुः परं अत्यन्तं कोपं क्रोधं ययौ प्राप २१ दुरात्मन्निति हे राजन्! अम्बिका यदा इति व्याजहार इतीति किं हे दुरात्मन्! त्वं तिष्ठ तिष्ठ तदा आकाशसंस्थितैः देवैः जय इति अभि १४३

 हितं अम्बिका देवी यदा यस्मिन् काले व्याजहार उक्तवती तदा तस्मिन् काले आकाशे संस्थिताः आकाशसंस्थिताः 
 तैः आकाशसंस्थितैः आकाशे देवी दानवसंग्रामदर्शनाय स्थितैर्देवैः इन्द्रादिभिः जयजय इति अभिहितं कृतम् २२ 
शुम्भेनेति हे राजन्! शुम्भेन आगत्य ज्वालातिभीषणा या शक्तिः मुक्ता आयान्ती वह्निकूटाभा सा महोल्कया निरस्ता ज्वालावत् अतिभीषणा ज्वालातिभीषणा मुक्ता क्षिप्ता तया देव्या आयान्ती आगच्छन्ती वह्नीनां कूटः वह्निकूटः वह्निकूटस्य आभेव आभा यस्याःसा वह्निकूटाभा वह्नीनां अग्नीनां कूटः समूहः आभाकान्तिः सा शक्तिःमहोल्कया महाज्वाला

म्बिकायदा ॥ तदाजयेत्यभिहितंदेवैराकाशसंस्थितैः २२ शुम्भेनागत्ययाशक्तिर्मुक्ताज्वालाति
भीषणा ॥ आयान्तीवह्निकूटाभासानिरस्तामहोल्कया २३ सिंहनादेनशुम्भस्यव्याप्तंलोकत्र
यान्तरम् ॥ निर्घातनिःस्वनोघोरोजितवानवनीपते २४ शुम्भमुक्ताञ्छरान्देवीशुम्भस्तत्प्रहिता

वत्या यद्वा तन्नामकशक्त्या निरस्ता दूरीकृता खण्डीकृता २३ सिंहेति हे राजन्! शुम्भस्य सिंहनादेन लोकत्रयान्तरम् व्याप्तं हे अवनीपते! घोरः निर्घातनिःस्वनः शुम्भनिनादम् जितवान् लोकानां त्रयं लोकत्रयं लोकत्रयस्य अन्तरम् लोकत्रयान्तरं लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः अन्तरं मध्यं अवन्याः पतिः अवनीपतिः तत्सम्बोधने हे अवनीपते! अवन्याः पृथिव्याः पतिः स्वामी घोरः भयङ्करः निर्घातनिःस्वनः उत्पातध्वनिः २४ शुम्भेति हे राजन्! देवी शुम्भमुक्तान्
शरान् चिच्छेद शुम्भस्तत्प्रहितान् शतशः अथ सहस्रशः शरान् उग्रैः स्वशरैः चिच्छेद शुम्भेन मुक्ताः शुम्भमुक्ताः तान् 

दु०टी० शुम्भमुक्तान् मुक्ताः प्रक्षिप्ताः शरान् बाणान् तथा प्रहिताः तत् प्रहिताः तान् तत्प्रहितान् तयादेव्या प्रहिताः क्षिप्ताः अथच अ० ६

१४५ शरान् बाणान् उग्रैः भयङ्करैः स्वस्य शराः स्वशराः तैः स्वशरैः स्वस्य स्वकीयस्य शराः बाणाः अनेन देवीशुम्भयोः सम

युद्धमुक्तम् २५ तत इति हे राजन्! ततः सा चण्डिका क्रुद्धा सती शूलेन तं अभिजघान तदा अभिहतः सः मूर्च्छितः सन्

भूमौ निपपातह ततः तदनन्तरं परस्परयुद्धानन्तरं सा प्रसिद्धा चण्डिका देवी तं शुम्भं अभिजघान अताडयत् तदा तस्मि

न्च्छरान् ॥ चिच्छेदस्वशरैरुग्रैःशतशोथसहस्रशः २५ ततस्साचण्डिकाक्रुद्धाशूलेनाभिजघान

तम् ॥ सतदाभिहतोभूमौमूर्च्छितोनिपपातह २६ ततोनिशुम्भःसम्प्राप्यचेतनामात्तकार्मुकः ॥

आजघानशरैर्देवींकालींकेशरिणन्तथा २७ पुनश्चकृत्वाबाहूनामयुतंदनुजेश्वरः ॥ चक्रायुधेन

दितिजश्छादयामासचण्डिकाम् २८ ततोभगवतीक्रुद्धा दुर्गादुर्गार्तिनाशिनी ॥ चिच्छेदता

न् समये अभिहतः ताडितः सः शुम्भः मूर्च्छितः सन् मूर्च्छां प्राप्तः सन् भूमौ पृथिव्याम् २६ तत इति हे राजन्! ततः चेत

नां सम्प्राप्य आत्तकार्मुकः निशुम्भः शरैर्देवीं कालीं तथा केशरिणं आजघान ततः तदनन्तरं शुम्भमूर्च्छानन्तरं आत्तं कार्मु

कं येन सः आत्तकार्मुकः आत्तंगृहीतं कार्मुकं धनुः शरैः बाणैः देवीं चण्डिकां केशरिणं सिंहं आजघान ताडयामास २७

पुनरिति हे राजन्! पुनः बाहूनां अयुतं कृत्वा दनुजेश्वरः दितिजः निशुम्भः चक्रायुधेन चण्डिकां छादयामास बाहूनां

हस्तानां अयुतं दशसहस्रं दनुजानां ईश्वरः दनुजेश्वरः ईश्वरः स्वामी दितेः जातः दितिजः चक्राणिच आयुधानिच १४५

दु०टी० एतेषां समाहारः चक्रायुधं तेन चक्रायुधेन आयुधानि शस्त्राणि समाहारः समूहः २८ तत इति हे राजन्! ततः दुर्गा दु अ०
१४६ र्गार्त्तिनाशिनी भगवती क्रुद्धा सती स्वशरैः तानि चक्राणि किञ्च तान् शायकान् चिच्छेद ततः तदनन्तरं चक्रायुधच्छेद ९
नानन्तरं दुःखेन गम्यते इति दुर्गा दुःखेन कष्टेन गम्यते ज्ञायते दुर्गे आर्त्तिः दुर्गार्त्तिः दुर्गार्त्तेः नाशिनी दुर्गार्त्तिनाशिनी दुर्गे सङ्कटे आर्तिः पीडा नाशिनी नाशकर्त्री भगवती चण्डिका स्वस्य शराः स्वशराः तैः स्वशरैः स्वस्य स्वकीयस्य शराः बाणाः शायकान् बाणान् २९ तत इति हे राजन्! ततः दैत्यसेनासमावृतः निशुम्भः गदां आदाय वेगेन चण्डिकां हन्तुं वै अभ्य

निचक्राणि स्वशरैश्शायकांश्चतान् २९ ततोनिशुम्भोवेगेन गदामादायचण्डिकाम् ॥ अभ्य
धावतवैहन्तुं दैत्यसेनासमावृतः ३० तस्यापततएवाशु गदांश्चिच्छेदचण्डिका ॥ खड्गेनशित
धारेण सचशूलंसमाददे ३१ शूलहस्तंसमायान्तं निशुम्भममरार्द्दनम् ॥ हृदिविव्याधशूलेन

धावततः तदनन्तरं चक्रायुधच्छेदनानन्तरं दैत्यानां सेना दैत्यसेना दैत्यसेनया समावृतः दैत्यसेनासमावृतः समावृतः युक्तः आदाय गृहीत्वा हन्तुं प्रहर्तुं वै इति निश्चयेन ३० तस्येति हे राजन्! चण्डिका शितधारेण खड्गेन आप ततः एव तस्य गदां आशु चिच्छेद सः शूलं समाददे शितधारेण तीक्ष्णधारेण आपततः एव आगच्छतः एव तस्य निशुम्भस्य आशु शीघ्रं सः निशुम्भः समाददे जग्राह ३१ शूलेति हे राजन्! चण्डिका वेगाविद्धेन शूलेन हृदि शूलहस्तं अमरार्द्दनं समायान्तं
निशुम्भं विव्याध वेगेन आविद्धं वेगाविद्धं तेन वेगाविद्धेन आविद्धं प्रक्षिप्तं हृदि हृदये शूलं हस्ते यस्य सः शूलहस्तः तं शूलहस्तं १४६

दु०टी० अमराणां अर्दनः अमरार्दनःतं अमरार्दनं अमराणां देवानां अर्दनः पीडकः समायान्तं आगच्छन्तं ३२ भिन्नस्येति हे राजन्! अ०
१४७ शूलेन भिन्नस्य तस्य हृदयात् अपरः महाबलः महावीर्य्यः पुरुषः तिष्ठ इति वदन् सन् निःसृतः भिन्नस्य विदीर्णस्य त ९
स्य निशुम्भस्यअपरः अन्यः महत् बलं यस्यसः महाबलः बलंसैन्यं महत् वीर्य्यं यस्यसः महावीर्य्यः वीर्य्यं पराक्रमः ३३
तस्येति हे राजन्! ततः देवी स्वनवत् प्रहस्य निष्क्रामतः तस्य शिरः खड्गेन चिच्छेद ततः असौ भुवि अपतत् ततः तद

वेगाविद्धेनचण्डिका ३२ भिन्नस्यतस्यशूलेन हृदयान्निस्सृतोपरः ॥ महाबलोमहावीर्य्यस्तिष्ठेति
पुरुषोवदन् ३३ तस्यनिष्क्रामतोदेवी प्रहस्यस्वनवत्ततः ॥ शिरश्चिच्छेदखड्गेन ततोसावप
तद्भुवि ३४ ततःसिंहश्चखादोग्रंदंष्ट्राक्षुण्णशिरोधरान् ॥ असुरांस्तांस्तथाकाली शिवदूतीतथा
परान् ३५ कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्म्महासुराः ॥ ब्रह्माणीमन्त्रपूतेन तोयेनान्येनिराकृ

नन्तरं निशुम्भहृदयात् पुरुषप्रादुर्भावानन्तरं देवी चण्डिका स्वनवत् सशब्दं यथास्यात्तथा प्रहस्य अट्टहासं कृत्वा नि
ष्क्रामतः निर्गच्छतः तस्य पुरुषस्य शिरः मस्तकं ततः तदनन्तरं शिरश्छेदनानन्तरं असौ पुरुषः भुवि पृथिव्याम् ३४
तत इति हे राजन्! ततः सिंहः दंष्ट्राक्षुण्णशिरोधरान् असुरान् उग्रं यथास्यात्तथा चखाद तथा कालीतान् चखाद तथा शिव
दूती अपरान् चखाद ततः तदनन्तरं शिरश्छेदनानन्तरं दंष्ट्राभिः क्षुण्णाः शिरोधराः येषां ते दंष्ट्राक्षुण्णशिरोधराः तान्
दंष्ट्राक्षुण्णशिरोधरान् क्षुण्णाःसंमर्दिताः शिरोधराः ग्रीवाः असुरान् दैत्यान् उग्रं भयानकं चखाद अभक्षयत् तान् असुरान् १४७

चखाद अभक्षयत् अपरान् अन्यान् दैत्यान् चखाद अभक्षयत् ३५ कौमारीति हे राजन् ! केचित् महासुराः कौमारीशक्ति निर्भिन्नाः सन्तः नेशुः अन्येमहासुराःब्रह्माणीमन्त्रपूतेन तोयेन निराकृताःसन्तः नेशुः महासुराः महादैत्याःकौमार्याःशक्तिः कौमारीशक्तिः कौमारीशक्त्या निर्भिन्नाःकौमारीशक्तिनिर्भिन्नाः निर्भिन्नाः विदारिताःनेशुः नाशं प्राप्नुवन्तःब्रह्मण्याःमन्त्रः ब्रह्माणीमन्त्रः ब्रह्माणीमन्त्रेण पूतंब्रह्माणीमन्त्रपूतंतेन ब्रह्माणीमन्त्रपूतेन पूतेन मन्त्रितेन तोयेन जलेन निराकृताःसन्तः ध्वस्ताः सन्त नेशुः नाशं प्राप्नुवन्तः ३६ माहेश्वरीति हे राजन् ! तथा अपरे माहेश्वरीत्रिशूलेन भिन्नाः सन्तः भुविपेतुः

ताः ३६ माहेश्वरीत्रिशूलेन भिन्नाःपेतुस्तथापरे ॥ वाराहीतुण्डघातेन केचिच्चूर्णीकृताभुवि ३७ खण्डखण्डञ्च चक्रेण वैष्णव्यादानवाःकृताः ॥ वज्रेणचैन्द्रीहस्ताग्र विमुक्तेनतथापरे ३८ केचि

केचित् दैत्याः वाराहीतुण्डघातेन चूर्णीकृताः सन्तः भुविपेतुः अपरे अन्ये दैत्याः माहेश्वर्याः त्रिशूलं माहेश्वरीत्रिशूलं तेन माहेश्वरीत्रिशूलेन भिन्नाः सन्तःविदारिताः सन्तः भुवि पृथिव्यांपेतुः पतन्तिस्म वाराह्याः तुण्डं वाराहीतुण्डं वाराहीतुण्डेन घातः वाराहीतुण्डघातः तेन वाराहीतुण्डघातेन तुण्डं मुखं घातः ताडनम् ३७ खण्डखण्डमिति हे राजन् ! वैष्णव्या चक्रेण दानवाः खण्डखण्डं यथास्यात्तथा कृताः तथा अपरे ऐन्द्रीहस्ताग्रविमुक्तेन बज्रेण खण्डखण्डम् यथास्यात्तथाकृताः खण्डस्य खण्डाः यस्यांक्रियायां तत्खण्डखण्डम् अपरे अन्ये दैत्याः ऐन्द्र्याः हस्तः ऐन्द्रीहस्तः ऐन्द्रीहस्तस्य अग्रं ऐन्द्री हस्ताग्रम् ऐन्द्रीहस्ताग्रेण विमुक्तः ऐन्द्रीहस्ताग्रविमुक्तः तेन ऐन्द्रीहस्ताग्रविमुक्तेन

 विमुक्तेनक्षिप्तेन ३८ केचिदिति हे राजन्! केचित् असुराः विनेशुः केचित् असुराः महाहवात् नष्टाः किञ्च कालीशिवदूती 
 मृगाधिपैः अपरे भक्षिताः असुराः दैत्याः विनेशुः मृताः असुराः दैत्याः महाहवात् महारणात् कालीच शिवदूतीच मृगा 
धिपश्च ते कालीशिवदूतीमृगाधिपाः तैः कालीशिवदूतीमृगाधिपैः मृगाधिपः सिंहः अपरे अन्ये दैत्याः ३६ इतिश्री
नागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेनिशुम्भवधोनामनवमोऽध्यायः ॥ ६ ॥ ० ॥ ० ॥ ० ॥ ० ॥

द्विनेशुरसुराः केचिन्नष्टामहाहवात् ॥ भक्षिताश्चापरेकालीशिवदूतीमृगाधिपैः ३९ ॥ इतिमा
र्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येनिशुम्भवधोनामनवमोऽध्यायः ९ ॥ ० ॥

ऋषिरुवाच ॥ निशुम्भंनिहतंदृष्ट्वा भ्रातरंप्राणसम्मितम् ॥ हन्यमानंबलंचैव शुम्भःक्रुद्धो
ब्रवीद्वचः १ बलावलेपदुष्टेत्वं मादुर्गेगर्व्वमावह ॥ अन्यासांबलमाश्रित्य युद्ध्यसेयातिमा

ऋषिरुवाच॥ निशुम्भमिति हे राजन्! प्राणसम्मितं भ्रातरं निशुम्भं निहतंदृष्ट्वा किंच बलं एव हन्यमानं दृष्ट्वा शुम्भः
क्रुद्धः सनदेवीं वचः अब्रवीत् प्राणेनसम्मितः प्राणसम्मितः तं प्राणसम्मितं सम्मितः तुल्यः निहतं हतं बलंएव सैन्यं एव ह
न्यते इतिहन्यमानं तत् हन्यमानं वचःवाक्यम् १ बलेति हे बलावलेपदुष्टे! हे दुर्गे! सात्वं गर्व माआवह सा का या त्वं अति
मानिनी सती अन्यासांबलं आश्रित्य युद्ध्यसे बलेन अवलेपः बलावलेपः बलावलेपात्दुष्टा बलावलेपदुष्टा तत्सम्बोधने हे
बलावलेपदुष्टे! अवलेपः गर्वः दुष्टादुर्विनीता मा आवह माकुरु अतिमानोस्ति यस्याः सा अतिमानिनी अन्यासां ब्राह्मया 

दीनां बलं आश्रयंआश्रित्य गृहीत्वा २ ॥ देव्युवाच ॥ एकैवेति हे दुष्ट ! अत्र जगति अहंएकाएव भवामि मम अपरा द्विती 
या कास्ति न कास्ति नकापीत्यर्थः अनुभयमानस्तुभेदो न वास्तवइत्याह पश्येति एताः मद्विभूतयः मयि एव विशन्त्यः त्वं पश्यअत्र जगति अस्मिन् संसारे एकाएव स्वगतभेदहीना एव अपरा अन्यासहायभूता मम विभूतयः मद्विभूतयः३ ततइति हे राजन् ! ततः ब्रह्माणीप्रमुखाः ताः समस्ताः देव्यःतस्याः देव्याःतनौ लयंजग्मुः तदाअम्बिका एकाएव आसीत्

निनी २ देव्युवाच ॥ एकैवाहंजगत्यत्र द्वितीयाकाममापरा ॥ पश्यैतादुष्टमय्येव विशन्त्योमद्वि भूतयः ३ ऋषिरुवाच ॥ ततःसमस्तास्तादेव्यो ब्रह्माणीप्रमुखालयम् ॥ तस्यादेव्यास्तनौज ग्मुरेकैवासीत्तदाम्बिका ४ देव्युवाच ॥ अहंविभूत्याबहुभिरिहरूपैर्य्यदास्थिता ॥ तत्संहृतंमयै कैव तिष्ठाम्याजौस्थिरोभव ५ ऋषिरुवाच ॥ ततःप्रववृतेयुद्धं देव्याश्शुम्भस्यचोभयोः ॥ पश्य

ततः तदनन्तरं शुम्भम्प्रति देवीवाक्यश्रवणानन्तरं ब्रह्माणीप्रमुखं यासान्ताः ब्रह्माणीप्रमुखाः प्रमुखं आदिः ताः प्रसिद्धा स्समस्तास्सम्पूर्णाः तनौशरीरे लयं अपृथक् भावं जग्मुः प्रापुः तदातस्मिन् काले अम्बिका देवी ४ ॥ देव्युवाच॥ अहमिति हेदुष्ट ! इह विभूत्या बहुभिःरूपैःयदास्थिता तत् मयासंहृतं अहंएका एवतिष्ठामित्वं आजौस्थिरःभवइहअस्मिन् संसारेबहु भिः अनेकैः रूपैःस्वरूपैः यदा यस्मिन् काले तत् बहुत्वं आजौरणे इहअस्मिन् ५ ॥ ऋषिरुवाच ॥ ततइति हे राजन् ! ततः देव्याः किञ्च शुम्भस्य उभयोः युद्धं प्रववृते कथम्भूत युद्धं पश्यतां सर्वदेवानां किञ्च असुराणां दारुणं ततः तदनन्तरं परस्पर 

संभाषणानन्तरं उभयोः देवीदानवयोः प्रववृते प्रवृत्तं पश्यन्तीति पश्यन्तः तेषां पश्यतां सर्वेचते देवाश्च सर्वदेवाः तेषांसर्व देवानां सर्वे समस्ताः देवाः इन्द्रादयः असुराणां दैत्यानां दारुणं भयदम् ६ शरवर्षैरिति हेराजन्! शरवर्षैः तथाशितैःशस्त्रैः किंच दारुणैः एव अस्त्रैः तयोः भूयः युद्धं अभूत् कथंभूतं युद्धं सर्वलोकभयंकरं शराणां वर्षाणि शरवर्षाणितैःशरवर्षैः शराणां बाणानां वर्षाणि वृष्टयः शितैः तीक्ष्णैः दारुणैः भयंकरैः तयोः देवीदानवयोः भूयः महत् सर्वेचते लोकाश्च सर्वलोकाः सर्वलोकानां भयंकरं सर्वलोकभयंकरं सर्वे समस्ताः लोकाः जनाः ७ दिव्यान्येति हे राजन्! अथ अम्बिकाशतशः यानि दिव्यानि अस्त्राणि मुमुचे तानि दैत्येन्द्रः तत्प्रतीघातकर्तृभिः अस्त्रैः बभञ्ज अथेत्यनन्तरं युद्धप्रारम्भानन्तरं अम्बिका चण्डिका तानि अस्त्राणि दैत्यानां इन्द्रः दैत्येन्द्रः इन्द्रः श्रेष्ठः शुम्भः तेषां प्रतीघातः तत्प्रतीघातः तत्प्रतीघातं कुर्वन्तीति तत्प्रतीघातकर्तॄणि तैः तत्प्रतीघातकर्तृभिः तेषां अस्त्राणां प्रतीघातः निवारणं बभञ्जचिच्छेद ८ मुक्तानीति हे राजन्! परमेश्वरी लीलया एव उग्रहुंकारोच्चारणादिभिः तेन मुक्तानि दिव्यानि अस्त्राणि बभञ्ज परमेश्वरी चण्डिका लीलया एव अनायासेनैव हुंकारस्य उच्चारणं हुंकारोच्चारणं उग्रञ्च तत् हुंकारोच्चारणञ्च उग्रहुंकारोच्चारणं उग्रहुंकारो

तांसर्व्वदेवानामसुराणांचदारुणम् ६ शरवर्षैश्शितैश्शस्त्रैस्तथास्त्रैश्चैवदारुणैः ॥ तयोर्युद्धमभूद्भूयस्सर्व्वलोकभयङ्करम् ७ दिव्यान्यस्त्राणिशतशो मुमुचेयान्यथाम्बिका ॥ बभञ्जतानिदैत्येन्द्रस्तत्प्रतीघातकर्तृभिः ८ मुक्तानितेनचास्त्राणि दिव्यानिपरमेश्वरी ॥ बभञ्जलीलयैवोग्रहुंका

चारणं आदिर्येषांते उग्रहुंकारोच्चारणादयः तैः उग्रहुंकारोच्चारणादिभिः तेन शुम्भेन मुक्तानि प्रक्षिप्तानि बभञ्ज चिच्छेद ९ तत इति हे राजन्! ततः असुरः सः देवीं शरशतैः आच्छादयत तत् कुपिता सा देवी धनुः इषुभिः चिच्छेद ततः तदनन्तरं शस्त्रच्छेदनानन्तरं असुरः दैत्यः सः शुम्भः देवीं चण्डिकां शराणां शतानि शरशतानि तैः शरशतैः शराणां बाणानां

रोच्चारणादिभिः ९ ततःशरशतैर्देवीमाच्छादयतसोसुरः ॥ सापितत्कुपितादेवी धनुश्चिच्छेद
चेषुभिः १० छिन्नेधनुषिदैत्येन्द्रस्तथाशक्तिमथाददे ॥ चिच्छेददेवीचक्रेण तामप्यस्यकरस्थि
ताम् ११ ततःखड्गमुपादायशतचन्द्रञ्चभानुमत् ॥ अभ्यधावततांदेवींदैत्यानामधिपेश्वरः १२
तस्यापततएवाशु खड्गंचिच्छेदचण्डिका ॥ धनुर्मुक्तैःशितैर्बाणैश्चर्मचार्ककरामलम् १३ हता
श्वःसतदादैत्यश्छिन्नधन्वाविसारथिः ॥ जग्राहमुद्गरंघोरमम्बिकानिधनोद्यतः १४ चिच्छेदा
पततस्तस्य मुद्गरंनिशितैःशरैः ॥ तथापिसोभ्यधावत्तां मुष्टिमुद्यम्यवेगवान् १५ समुष्टिंपा

तत् तस्मात् कारणात् कुपिता क्रुद्धा इषुभिः बाणैः १० छिन्न इति तथा तेन प्रकारेण छिन्ने धनुषीत्यन्वयः ११ तत इति शक्तिच्छेदनानन्तरमित्यर्थः भानुमदिति किरणयुक्तमित्यर्थकं खड्गस्य शतचन्द्रस्य चर्मणश्च विशेषणं तदा युद्धसकालेतु दैत्यानामधिपेश्वर इति गमकत्वात्ससास्त्रः १२ चर्मेति चेतनाश्वसारथ्योः समुच्चयः १३ तदाह हताश्व

दु०टी० इति १४ समुद्दिष्टमिति देव्या हृदये इत्यन्वयः तलं प्रसृतांगुलिकचपेटः १५ । १६ सहसा तर्कितं १७ उत्पत्येति अ०
१५३ हे राजन् ! सः उत्पत्य देवीं प्रगृह्य उच्चैः गगनं आस्थितः तत्रापि निराधारा सा चण्डिका तेन सह युयुधे सः शुम्भः उ १०
त्पत्य भूमेः सकाशात् ऊर्ध्वं गत्वा प्रगृह्य गृहीत्वा उच्चैः महत् गगनं आकाशं आस्थितः आश्रितवान् तत्रापि गगने अपि
निर्गतः आधारो यस्याः सा निराधारा तेन शुम्भेन १८ नियुद्धमिति हे राजन् ! तदा चण्डिका किंच दैत्यः परस्परं नियु

तयामासहृदयेदैत्यपुङ्गवः ॥ देव्यास्तंचापिसादेवी तलेनोरस्यताडयत् १६ तलप्रहाराभिहतो
निपपातमहीतले ॥ सदैत्यराजःसहसा पुनरेवतथोत्थितः १७ उत्पत्यचप्रगृह्योच्चैर्देवींगगन
मास्थितः ॥ तत्रापिसानिराधारा युयुधेतेनचण्डिका १८ नियुद्धंखेतदादैत्यश्चण्डिकाचपरस्प
रम् ॥ चक्रतुःप्रथमंसिद्धमुनिविस्मयकारकम् १९ ततोनियुद्धंसुचिरं कृत्वातेनाम्बिकासह ॥

द्धं खे चक्रतुः कथम्भूतं नियुद्धं प्रथमं पुनः कथम्भूतं नियुद्धं सिद्धमुनिविस्मयकारकम् तदा तस्मिन् काले दैत्यः शुम्भः
परस्परं अन्योन्यं नियुद्धं बाहुयुद्धं खे आकाशे प्रथमं अभूत् पूर्वसिद्धाश्च मुनयश्च ते सिद्धमुनयः सिद्धमुनीनां विस्म
यः सिद्धमुनिविस्मयः सिद्धमुनिविस्मयं करोतीति सिद्धमुनिविस्मयकारकं सिद्धाः देवयोनिविशेषाः मुनयः
ऋषयः विस्मयः आश्चर्यं १९ तत इति हे राजन् ! ततः अम्बिका तेन सह सुचिरं नियुद्धं कृत्वा उत्पात्य भ्रामयामास
किञ्च धरणीतले चिक्षेप ततः तदनन्तरं बाहुयुद्धानन्तरं तेन शुम्भेन सुचिरं मनोहरं नियुद्धं बाहुयुद्धं उत्पात्य कन्दुक १५३

वत् उपरि क्षिप्त्वा पतनसमये चरणमुद्धृत्य धरणीतले पृथिव्याम् २० सक्षिप्त इति हे राजन्! क्षिप्तः सः धरणीं प्राप्य वेगितः सन् मुष्टिं उद्यम्य चण्डिकानिधनेच्छया अभ्यधावत कथम्भूतः स दुष्टात्मा सः शुम्भः धरणीं पृथिवीं वेगितःसन् वेगवान् सन् उद्यम्य उद्योगंकृत्वा चण्डिकायाः निधनं चण्डिकानिधनं चण्डिकानिधने इच्छा चण्डिका निधनेच्छा तया चण्डिकानिधनेच्छया निधनं मरणं दुष्टः आत्मा यस्य सः दुष्टात्मा दुष्टः कुटिलः आत्मा अन्तः करणम् २१ तमिति हे राजन्! ततः देवी सर्व्वदैत्यजनेश्वरं आयान्तं तं शूलेन वक्षसि भित्त्वा जगत्यां पातया

उत्पात्यभ्रामयामास चिक्षेपधरणीतले २० सक्षिप्तोधरणींप्राप्य मुष्टिमुद्यम्यवेगितः ॥ अभ्य धावतदुष्टात्मा चण्डिकानिधनेच्छया २१ तमायान्तंततोदेवी सर्वदैत्यजनेश्वरम् ॥ जगत्यांपात यामास भित्त्वाशूलेनवक्षसि २२ सगतासुःपपातोर्व्यां देवीशूलाग्रविक्षतः ॥ चालयन्सकलां

मास ततः तदनन्तरं धावनानन्तरं दैत्याश्च ते जनाश्च दैत्यजनाः सर्व्वेच ते दैत्यजनाश्च सर्व्वदैत्यजनाः सर्व्व दैत्यजनानां ईश्वरः सर्व्वदैत्यजनेश्वरः तं सर्व्वदैत्यजनेश्वरं सर्व्वे समस्ताः ईश्वरः स्वामी आयान्तं आगच्छन्तं तं शुम्भं वक्षसि हृदये जगत्यां भूमौ २२ स इति हे राजन्! देवीशूलाग्रविक्षतः गतासुः सः साब्धिद्वीपांसपर्व्वताम् सक लाम् पृथ्वीं चालयन्सन् उर्व्यां पपात चालयन्निति 'ह्रस्वाभावः आर्षः' देव्याश्शूलं देवीशूलं देवीशूलस्य अग्रं देवीशूलाग्रं देवीशूलाग्रेण विक्षतः देवीशूलाग्रविक्षतः अग्रम् अग्रभागः विक्षतः कृतव्रणः गताः असवो यस्य सः गतासुः असवः 

 प्राणाः सः शुम्भः अब्धयश्च द्वीपाश्च ते अब्धिद्वीपाः अब्धिद्वीपैः सहवर्त्तमाना साब्धिद्वीपातताम् साब्धिद्वीपाम् अब्धयः 
 समुद्राः सहवर्त्तमाना युक्ता पर्व्वतैः सहवर्त्तमाना सपर्व्वता ताम् सपर्व्वताम् सहवर्त्तमाना युक्ता सकलाम् समस्ताम् 
चालयन्सन् कम्पयन्सन् उर्व्यां पृथिव्याम् २३ तत इति हे राजन्! ततः दुरात्मानि तस्मिन् हते सति प्रसन्नं अखिलं जगत् अतीवस्वास्थ्यं आप किञ्च नभः निर्म्मलं अभवत् ततःतदनन्तरं शुम्भपतनानन्तरं दुष्टः आत्मा यस्य सः दुरात्मा तस्मिन् दुरात्मानि दुष्टः कुटिलः आत्मा अन्तःकरणं तस्मिन् शुम्भे हते सति प्रहारिते सति प्रसन्नं प्रकाशवत् अखिलं

पृथ्वीं साब्धिद्वीपांसपर्वताम् २३ ततःप्रसन्नमखिलं हतेतस्मिन्दुरात्मनि ॥ जगत्स्वास्थ्यमती
वाप निर्म्मलंचाभवन्नभः २४ उत्पातमेघाःसोल्कायेप्रागासंस्तेशमंययुः ॥ सरितोमार्गवाहि
न्यस्तथासंस्तत्रपातिते २५ ततोदेवगणाःसर्व्वे हर्षनिर्भरमानसाः ॥ बभूवुर्निहतेतस्मिन् ग

समस्तं अतीव अत्यन्तमेव स्वास्थ्यं अनाविक्तबलं आप प्राप नभः आकाशं निर्म्मलं स्वच्छम् २४ उत्पातेति हे राजन्! तत्र पातिते सति ये उत्पातमेघाः प्राक् सोल्काः आसन् ते शमंययुः तथा सरितःमार्गवाहिन्यः आसन तत्र शुम्भे पातिते सति हते सति उत्पातमेघाः उत्पातसूचकाः मेघाः प्राक् शुम्भवधात् पूर्व्वं उल्कया सहवर्त्तमानाःसोल्काः सहवर्त्तमाना युक्ताः ते उत्पातमेघाः शमंशान्तिं ययुः प्रापुः तथा तद्वत् सरितः नद्यः मार्गेण वहन्तीति मार्गवाहिन्यःआसन् बभूवुः २५ तत इति हे राजन्! तस्मिन् निहते सति ततः सर्व्वेदेवगणाः हर्षनिर्भरमानसाः सन्तः बभूवुः गन्धर्व्वाःललितंजगुः तस्मिन् 

दु०टी० शुम्भे निहते सति प्रहारिते सति ततः तस्मात् कारणात् सर्व्वैःसमस्ताः देवानां गणाः देवगणाः देवानां इन्द्रादीनां गणाः अ०
१५६ समूहाः हर्षेण निर्भरं मानसं येषां ते हर्षनिर्भरमानसाः हर्षेण आनन्देन निर्भरं पूर्णं मानसं अन्तःकरणं ललितं मनोहरं १०
यथास्यात्तथा जगुः गानं कृतवन्तः २६ अवादयन्निति हे राजन्! तथैव अन्ये वाद्यान् अवादयन् किञ्च अप्सरोगणाः ननृतुः
तथावाताः पुण्याः ववुः दिवाकरः सुप्रभः अभूत् अन्ये देवयोनिविशेषाः अवादयन् वादितवन्तः अप्सरसाङ्गणाः अप्सरो
गणाः अप्सरसां देववेश्यानां गणाः समूहाः ननृतुः नृत्यन्तिस्म वाताः वायवःपुण्याः अनुकूलाः ववुः वान्तिस्म दिवाकरः

न्धर्वाललितंजगुः २६ अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः ॥ ववुःपुण्यास्तथावाताः सु
प्रभोभूद्दिवाकरः २७ जज्वलुश्चाग्नयःशान्ताः शान्तदिग्जनितस्वनाः २८ इति मार्कण्डेयपुरा
णेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येशुम्भवधोनामदशमोऽध्यायः १० ॥ ० ॥ ० ॥

सूर्य्यःसुप्रभः विमलतेजस्कः २७ जज्वलुरिति हे राजन्! अग्नयः शान्ताः सन्तः जज्वलुः कथम्भूताः अग्नयः शान्तदिग्ज
नितस्वनाः अग्नयः आहवनीयादयः शान्ताः सन्तः सौम्याः सन्तः दिक्षु जनिताः दिग्जनिताः दिग्जनिताश्च ते स्वना
श्च दिग्जनितस्वनाः शान्ताः दिग्जनितस्वनाः येषान्ते शान्तदिग्जनितस्वनाः दिक्षु दिशासु जनिताः जाताः
स्वनाः उत्पातसूचकस्फुटनादिशब्दाः ॥ २८ ॥ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेशुम्भवधोनाम
दशमोऽध्यायः १० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ १५६

ऋषिरुवाच ॥ देव्येति हे राजन्! तत्र देव्या महासुरेन्द्रे हते सति वह्निपुरोगमाः सेन्द्राः सुराः कात्यायनीं तां तुष्टु अ० ११
वुः कथम्भूताः सुराः इष्टलाभात् विकाशिवक्त्राः तु पादपूर्त्तौ पुनः कथम्भूताः सुराः विकाशिताशाः तत्र तस्मिन् युद्धे
महान्तश्चते असुराश्च महासुराः महासुराणां इन्द्रः महासुरेन्द्रः तस्मिन् महासुरेन्द्रे असुराः दैत्याः इन्द्रः श्रेष्ठः शुम्भः
हते सति प्रहारिते सति वह्निः पुरोगमो येषान्ते वह्निपुरोगमाः वह्निः अग्निः पुरोगमः मुख्यः इन्द्रेण सहवर्त्तमानाः
सेन्द्राः सह वर्त्तमानाः युक्ताः सुराः देवाः तां चण्डिकां तुष्टुवुः स्तुतवन्तः इष्टस्य लाभः इष्टलाभः तस्मात् इष्ट

ऋषिरुवाच ॥ देव्याहतेतत्रमहासुरेन्द्रे सेन्द्राःसुरावह्निपुरोगमास्ताम् ॥ कात्यायनींतुष्टुवु
रिष्टलाभाद्विकाशिवक्त्रास्तुविकाशिताशाः १ देविप्रपन्नार्त्तिहरेप्रसीद प्रसीदमातर्जगतोखिल

लाभात् इष्टस्य शुम्भादिवधस्य लाभः प्राप्तिः विकाशीनि वक्त्राणि येषान्ते विकाशिवक्त्राः विकाशीनि विकस्वराणि
वक्त्राणि मुखानि विकाशिताः आशाः यैः ते विकाशिताशाः विकाशिताः प्रकाशिताः आशाः दिशः १ देवीति हे देवि!
हे प्रपन्नार्त्तिहरे! त्वं प्रसीद हे अखिलस्य जगतः मातः! त्वं प्रसीद हे विश्वेश्वरि! त्वं प्रसीद विश्वंपाहि हे देवि! त्वं
चराचरस्य ईश्वरी भवसि प्रपन्नानां आर्त्तिः प्रपन्नार्त्तिः प्रपन्नार्त्तिं हरतीति प्रपन्नार्त्तिहरातत्सम्बोधने हे प्रपन्नार्त्तिहरे!
प्रपन्नानां भक्तानां आर्त्तिः पीडा प्रसीद प्रसन्ना भव अखिलस्य समस्तस्य जगतः लोकस्य विश्वेषां ईश्वरी विश्वेश्वरी
तत्सम्बोधने हे विश्वेश्वरि! विश्वेषां चतुर्दशलोकानां ईश्वरी स्वामिनी विश्वं जगत् पाहि रक्ष चराश्च अचराश्च एते 

षां समाहारः चराचरं तस्य चराचरस्य चराः जङ्गमाः मनुष्यादयः अचराः स्थावराः वृक्षपर्व्वतादयः ईश्वरीकर्त्री २ 
 आधारभूतेति हे देवि ! यतः एकात्वं महीस्वरूपेण स्थिता असि अतः जगतः आधारभूता भवसि हे अलंघ्यवीर्ये! अपां स्वरूपस्थितया त्वया कृत्स्नं एतत् आप्यायते यतः यस्मात् कारणात् एका असहाया मह्याः स्वरूपं महीस्वरूपं तेन महीस्वरूपेण मह्याः पृथिव्याः अतः अस्मात् कारणात् जगतः लोकस्य अलंघ्यं वीर्यं यस्याः सा अलंघ्यवीर्या तत्स स्य ॥

प्रसीदविश्वेश्वरिपाहिविश्वं त्वमीश्वरीदेविचराचरस्य २ आधारभूताजगतस्त्वमेका महीस्वरूपेणयतःस्थितासि ॥ अपांस्वरूपस्थितयात्वयैतदाप्यायतेकृत्स्नमलंघ्यवीर्ये ३ त्वं वैष्णवीशक्तिरनन्तवीर्य्या विश्वस्यबीजंपरमासिमाया ॥ संमोहितंदेविसमस्तमेतत्त्वंवैप्रसन्नाभु विमुक्तिहेतुः ४ विद्याःसमस्तास्तवदेविभेदाः स्त्रियः समस्ताःसकलाजगत्सु ॥ त्वयैकयापूरित

म्बोधने हे अलंघ्यवीर्ये ! वीर्यं पराक्रमः अपां जलानां स्वरूपेण स्थिता स्वरूपस्थिता तया स्वरूपस्थितया कृत्स्नं समस्तं एतत् जगत् आप्यायते व्याप्यते ३ त्वमिति हे देवि ! अनन्तवीर्यात्वं वैष्णवी शक्तिः असि त्वं विश्वस्य बीजं असि त्वं पर मा माया असि त्वया समस्तं एतत् संमोहितं त्वं प्रसन्ना सती वै भुवि मुक्तिहेतुः भवसि अनन्तं वीर्यं यस्याःसा अनन्त वीर्या अनन्तं असंख्यातं वीर्यं पराक्रमः वैष्णवी विष्णुसम्बन्धिनी विश्वस्य जगतः बीजं कारणं परमा उत्कृष्टा एतत् जगत् संमोहितं संसारगर्त्ते पातितं तर्त्कि मोक्षोनास्त्येवेत्यतआह प्रसन्ना सती कृतप्रसादा सती वै इति प्रसिद्धे 

 भुवि जगत्यां मुक्तेः हेतुः मुक्तिहेतुः हेतुः कारणम् ४ विद्या इति हे देवि! समस्ताः विद्याः तव भेदाः भवन्ति जगत्सु सक 
लाः समस्ताः स्त्रियः तव भेदाः भवन्ति अम्बया एकया त्वया एतत् पूरितं स्तव्यपरापरा उक्तिः स्तुतिः ते का भवति न
कापीत्यर्थः समस्ताः अष्टादश विद्याः 'अङ्गानि ६ वेदाश्चत्वारो ४ मीमांसा ११ न्यायविस्तरः १२ पुराणं १३ धर्म्मशा
स्त्रञ्च १४ विद्या ह्येताश्चतुर्दश। आयुर्वेद धनुर्वेद गान्धर्वार्थ शास्त्रैः सहाष्टादश भेदाः सकलाः चतुःषष्टिकलोपेताः पाति
व्रत्यसौन्दर्यतारुण्याद्युपेताः' समस्ताः सम्पूर्णाः स्त्रियः नार्यः भिदाः अंशाः एतत् जगत् पूरितं व्याप्तं स्तव्ये परा स्तव्य

मम्बयैतत्कातेस्तुतिःस्तव्यपरापरोक्तिः ५ सर्व्वभूतायदादेवी स्वर्ग्गमुक्तिप्रदायिनी ॥ त्वंस्तु
तास्तुतयेकावा भवन्तुपरमोक्तयः ६ सर्व्वस्यबुद्धिरूपेण जनस्यहृदिसंस्थिते ॥ स्वर्ग्गापवर्ग्गे

परा परास्तव्ये स्तुति विषये परा परा गौणी मुख्या उक्तिः तत्तद्रूपा स्तुतिः ते तव ५ पुनरपिस्तुतेरघटनामाह सर्वेति हे
अम्ब! सर्व भूता देवी स्वर्ग मुक्तिप्रदायिनी यदात्वं स्तुता तदा तव स्तुतये परमोक्तयः कावाभवन्तु न कापीत्यर्थः सर्वभूता वि
श्वात्मिका देवी द्योतनशीला स्वर्गश्च मुक्तिश्च स्वर्गमुक्ती स्वर्गमुक्त्योः प्रदायिनी स्वर्गमुक्तिप्रदायिनी मुक्तिः मोक्षः
प्रदायिनी दात्री परमाश्च ताः उक्तयश्च परमोक्तयः परमाः अधिकाः ६ तथाप्यभ्युपगम्याप्याह सर्वस्येति हे सर्व्वस्य
जनस्य हृदि बुद्धि रूपेण संस्थिते! हे स्वर्गापवर्गदे! हे देवि! हे नारायणि! ते नमः अस्तु हृदि हृदये बुद्धिरूपेण निश्चया
त्मकज्ञानेन स्वर्गश्च अपवर्गश्च तौ स्वर्गापवर्गौ स्वर्गापवर्गौ ददातीति स्वर्गापवर्गदा तत्सम्बोधने हे स्वर्गापवर्गदे! 

 अपवर्गः मोक्षः हे देवि! हे द्योतनशीले! नारायणस्य शक्तिः नारायणी नारायणस्य विष्णोः यद्वा नारस्य अयनी नारायणी 
नारस्य जीवसमूहस्य अयनी स्थानभूता ते तुभ्यं नमः नमस्कारः ७ कलेति हे कलाकाष्ठादिरूपेण परिणामप्रदायि
नि! हे विश्वस्य उपरतौ शक्ते! हे नारायणि! तेनमः अस्तु कलाच काष्ठाच कलाकाष्ठे कलाकाष्ठे आदिर्यस्यसः कलाका
ष्ठादिः कलाकाष्ठादेः रूपं कलाकाष्ठादिरूपं तेन कलाकाष्ठादिरूपेण कला त्रिंशत्काष्ठात्मकः कालः काष्ठा अष्टादश
निमेषात्मकः कालः परिणामं प्रददातीति परिणामप्रदायिनी तत्सम्बोधने हे परिणामप्रदायिनि! परिणामं जन्यवस्तू

देदेवि नारायणिनमोस्तुते ७ कलाकाष्ठादिरूपेण परिणामप्रदायिनि ॥ विश्वस्योपरतौशक्ते
नारायणिनमोस्तुते ८ सर्व्वमङ्गलमाङ्गल्ये शिवेसर्व्वार्थसाधिके ॥ शरण्येत्र्यम्बकेगौरि नारा

नां अवस्थाविशेषं विश्वस्य जगतः उपरतौ नाशे शक्ते समर्थे! ते तुभ्यं नमः नमस्कारः ८ सर्व्वमङ्गलेति हे सर्व्वमङ्ग
ल माङ्गल्ये हे शिवे! हेसर्वार्थ साधिके! हे शरण्ये! हे त्र्यम्बके! हे गौरि! हे नारायणि! ते नमः अस्तु सर्व्वाणि मङ्गलानियस्यां
सा सर्व्वमङ्गला सर्व्वमङ्गलाचासौ माङ्गल्या च सर्व्वमङ्गलमाङ्गल्या तत्सम्बोधने हे सर्व्वमङ्गलमाङ्गल्ये! सर्व्वाणि स
मस्तानि मङ्गलानि शुभानि माङ्गल्या भक्तानां आर्तिहारिणी हे शिवे! हे मुक्तिप्रदे! सर्वेषां अर्थः सर्वार्थः सर्व्वार्थस्य साधि
का सर्व्वार्थसाधिका तत्सम्बोधने हे सर्व्वार्थसाधिके! सर्वेषां जनानां अर्थः प्रयोजनं साधिका कर्त्री शरणे साध्वी शर
ण्यातत्सम्बोधने हे शरण्ये! शरणे रक्षणे साध्वी हितकारिणी त्रीणि अम्बकानियस्याः सा त्र्यम्बका तत्सम्बोधने हे त्र्यम्ब 

दु०टी० के! अम्बकानि नेत्राणि हे गौरि गौरवर्णे! ते तुभ्यं नमः नमस्कारः ९ सृष्टीति हे सृष्टिस्थितिविनाशानां शक्तिभूते! अ०
१६१ हे सनातनि! हे गुणाश्रये! हे अगुणमये! हे नारायणि! तेनमः अस्तु सृष्टिश्च स्थितिश्च विनाशश्च ते सृष्टिस्थिति ११
विनाशाः तेषां सृष्टिस्थितिविनाशानाम् सृष्टिः उत्पत्तिः स्थितिः पालनं विनाशः संहारः हे सनातनि! हे नित्ये! गुणानां आश्रया गुणाश्रया तत्सम्बोधने हे गुणाश्रये! गुणानां महदादीनां आश्रया आश्रयभूता हे अगुणमये! अविद्य मानगुणकृत विकारे! ते तुभ्यं नमः नमस्कारः १० शरणेति हे शरणागतदीनार्त्तपरित्राणपरायणे! हे सर्व्वस्य आर्त्ति

यणिनमोस्तुते ९ सृष्टिस्थितिविनाशानां शक्तिभूतेसनातनि ॥ गुणाश्रयेगुणमये नारायणिन मोस्तुते १० शरणागतदीनार्त्तपरित्राणपरायणे ॥ सर्व्वस्यार्त्तिहरेदेविनारायणिनमोस्तुते ११

हरे! हे देवि! हे नारायणि! ते नमः अस्तु शरणे आगताः शरणागताः शरणागताश्चते दीनाश्च शरणागतदीनाः शरणा गतदीनाश्चते आर्त्ताश्च शरणागतदीनार्त्ताः शरणागतदीनार्त्तानां परित्राणं शरणागतदीनार्त्तपरित्राणं शरणागत दीनार्त्तपरित्राणे परायणा शरणागतदीनार्त्तपरित्राणपरायणा तत्सम्बोधने हे शरणागतदीनार्त्तपरित्राणपरायणे! आगताः प्राप्ताः दीनाः सार्वदिक् दुःखभाजः आर्त्ताः तस्करादिपीडिताः परित्राणं रक्षणं परायणा तत्परा सर्व्वस्य जनस्य आर्त्तिं हरतीति आर्त्तिहरा तत्सम्बोधने हे आर्त्तिहरे! आर्त्तिं पीडां हरति नाशयति ते तुभ्यं
नमः नमस्कारः ११ हंसेति हे हंसयुक्तविमानस्थे! हे ब्रह्माणीरूपधारिणि! हे कौशाम्भःक्षुरिके! हे देवि! हे नारायणि! ते १६१

दु०टी० नमः अस्तु हंसैः युक्तं हंसयुक्तं हंसयुक्तं च तत् विमानंच हंसयुक्तविमानं हंसयुक्तविमाने तिष्ठतीति हंसयुक्तविमानस्था अ०
१६२ तत्सम्बोधने हे हंसयुक्तविमानस्थे ! ब्रह्माण्याः रूपं ब्रह्माणीरूपं ब्रह्माणीरूपस्य धारिणी ब्रह्माणीरूपधारिणी तत्सम्बो ११
धने हे ब्रह्माणीरूपधारिणि! धारिणी धारिका कुशस्य अयं कौशः कौशस्य अम्भः कौशाम्भः कौशाम्भसः क्षुरिका कौशा
म्भःक्षुरिका तत्सम्बोधने हे कौशाम्भःक्षुरिके! कुशस्य जलस्य अयं कौशः कमण्डलुः अम्भो जलं क्षुरिका सेचिका ते तुभ्यं
नमः नमस्कारः १२ त्रिशूलेति हे माहेश्वरीस्वरूपेण त्रिशूलचन्द्राहिधरे! हे महावृषभवाहिनि! हे नारायणि! ते नमः अस्तु

हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि ॥ कौशाम्भःक्षुरिकेदेवि नारायणिनमोस्तुते १२ त्रिशू
लचन्द्राहिधरे महावृषभवाहिनि ॥ माहेश्वरीस्वरूपेण नारायणिनमोस्तुते १३ मयूरकुक्कुटवृते

माहेश्वर्य्याः स्वरूपं माहेश्वरीस्वरूपं तेन माहेश्वरीस्वरूपेण धरतीति धरा त्रिशूलंच चन्द्रश्च अहिश्च ते त्रिशूलचन्द्रा
हयः त्रिशूलचन्द्राहीनां धरा त्रिशूलचन्द्राहिधरा तत्संबोधने हे त्रिशूलचन्द्राहिधरे! धरति धारयति अहिः सर्पः महांश्चा
सौ वृषभश्च महावृषभः महावृषभं वाहयितुं शीलं यस्याः सा महावृषभवाहिनी तत्संबोधने हे महावृषभवाहिनि! ते
तुभ्यं नमः नमस्कारः १३ मयूरेति हे मयूरकुक्कुटवृते! हे महाशक्तिधरे! हे अनघे! हे कौमारीरूपसंस्थाने! हे नारायणि! ते
नमः अस्तु मयूरश्च कुक्कुटश्च मयूरकुक्कुटौ मयूरकुक्कुटाभ्यां वृता मयूरकुक्कुटवृता तत्संबोधने हे मयूरकुक्कुटवृते! वृता
वेष्टिता धरतीति धरा महतीचासौ शक्तिश्च महाशक्तिः महाशक्तेः धरा महाशक्तिधरा तत्संबोधने हे महाशक्तिधरे! धरति १६२

दु०टी० धारयति हे अनघे ! अघरहिते कौमार्याः रूपं कौमारी रूपं कौमारीरूपं संस्थानं यस्याः सा कौमारीरूपसंस्थाना तत्सम्बो अ०
१६३ धने हे कौमारीरूपसंस्थाने ! संस्थानं अवयवसन्निवेशः ते तुभ्यं नमः नमस्कारः १४ शङ्खेति हे शङ्खचक्रगदाशार्ङ्ग ११
गृहीतपरमायुधे! हे वैष्णवीरूपे ! हेनारायणि! त्वं प्रसीद ते नमः अस्तु परमाणिच तानि आयुधानिच परमायुधानि शङ्खश्च
चक्रंच गदाच शार्ङ्गश्च तानि शङ्खचक्रगदाशार्ङ्गाणि शङ्खचक्रगदाशार्ङ्गाणि गृहीतानि परमायुधानि यया सा शङ्खचक्र
गदाशार्ङ्गगृहीतपरमायुधा तत्सम्बोधने हे शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे ! परमाणि उत्कृष्टानि आयुधानि शस्त्रा

महाशक्तिधरेनघे ॥ कौमारीरूपसंस्थाने नारायणिनमोस्तुते १४ शङ्खचक्रगदाशार्ङ्गगृहीतप
रमायुधे ॥ प्रसीदवैष्णवीरूपे नारायणिनमोस्तुते १५ गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे ॥
वाराहरूपिणिशिवे नारायणिनमोस्तुते १६ नृसिंहरूपेणोग्रेण हन्तुंदैत्यान्कृतोद्यमे ॥ त्रैलो

णि शार्ङ्गं धनुः वैष्णव्याः रूपं यस्याः सा वैष्णवीरूपा तत्सम्बोधने हे वैष्णवीरूपे ! प्रसीद प्रसन्ना भव ते तुभ्यं नमः
नमस्कारः १५ गृहीत इति हे गृहीतोग्रमहाचक्रे ! हे दंष्ट्रोद्धृतवसुन्धरे ! हे वाराहरूपिणि! हे शिवे ! हे नारायणि! ते नमः
अस्तु महच्च तत् चक्रं च महाचक्रं उग्रं च तत् महाचक्रं च उग्रमहाचक्रं गृहीतं उग्रमहाचक्रं यया सा गृहीतोग्रमहा
चक्रा तत्सम्बोधने हे गृहीतोग्रमहाचक्रे! उग्रं भयानकं दंष्ट्राभ्यां उद्धृता वसुन्धरा यया सा दंष्ट्रोद्धृतवसुन्धरा तत्सम्बोध
ने हे दंष्ट्रोद्धृतवसुन्धरे ! उद्धृता निष्काशिता वसुन्धरा पृथिवी वाराहस्य रूपं यस्याः सा वाराहरूपिणी तत्सम्बोधने हे १६३

 वाराहरूपिणि! तेतुभ्यं नमः नमस्कारः १६ नृसिंहेति हे उग्रेण नृसिंहरूपेण दैत्यान् हन्तुं कृतोद्यमे! हे त्रैलोक्यत्राणस 
 हिते! हे नारायणि! ते नमः अस्तु उग्रेण भयानकेन नृसिंहस्य रूपं नृसिंहरूपं तेन नृसिंहरूपेण हन्तुं प्रहर्त्तुं कृतः उद्यमो 
यया सा कृतोद्यमा तत्सम्बोधने हे कृतोद्यमे! उद्यमः उद्योगः त्रयो लोकाः तेषां भावस्त्रैलोक्यं तस्य त्राणाय सम्यक्
हिता त्रैलोक्यत्राणसाहिता तत्सम्बोधने हे त्रैलोक्यत्राणसहिते! त्राणाय रक्षणाय हितकर्त्री 'समोमस्यहितेलोपः' ते तुभ्यं
नमः नमस्कारः १७ किरीटिनीति हे किरीटिनि! हे महावज्रे! हे सहस्रनयनोज्ज्वले! हे वृत्रप्राणहरे! हे ऐन्द्रि! हे नारायणि!

क्यत्राणसहिते नारायणिनमोस्तुते १७ किरीटिनिमहावज्रे सहस्रनयनोज्ज्वले ॥ वृत्रप्राणहरे
चैन्द्रि नारायणिनमोस्तुते १८ शिवदूतीस्वरूपेण हतदैत्यमहाबले ॥ घोररूपेमहारावे नारा

ते नमः अस्तु किरीटमस्ति यस्याः सा किरीटिनी तत्सम्बोधने हे किरीटिनि! किरीटं मुकुटं महद्वज्रं यस्याः सा महावज्रा
तत्सम्बोधने हे महावज्रे! सहस्राणिच तानि नयनानि च सहस्रनयनानि सहस्रनयनैः उज्ज्वला सहस्रनयनोज्ज्वला
तत्सम्बोधने हे सहस्रनयनोज्ज्वले! नयनानि नेत्राणि उज्ज्वला दीप्यमाना वृत्रस्य प्राणाः वृत्रप्राणाः वृत्रप्राणं हरतीति
वृत्रप्राणहरा तत्सम्बोधने हे वृत्रप्राणहरे! वृत्रस्य वृत्रासुरस्य ते तुभ्यं नमः नमस्कारः १८ शिवेति हे शिवदूतीस्वरूपेण
हतदैत्यमहाबले! हे घोररूपे! हे महारावे! हे नारायणि! ते नमः अस्तु शिवः दूतो यस्याः सा शिवदूती शिवदूत्याः स्वरूपं
शिवदूतीस्वरूपं तेन शिवदूतीस्वरूपेण महत् बलं येषां ते महाबलाः दैत्येषु महाबलाः दैत्यमहाबलाः हताः दैत्यमहा 

बलाः यया सा हतदैत्यमहाबला तत्सम्बोधने हे हतदैत्यमहाबले ! बलं पराक्रमं हताः प्रहारिताः घोरं रूपं यस्याः सा 
घोररूपा तत्सम्बोधने हे घोररूपे ! घोरं भयानकं रूपं स्वरूपं महान् रावो यस्याः सा महारावा तत्सम्बोधने हे महारावे ! रावः शब्दः ते तुभ्यं नमः नमस्कारः १८ दंष्ट्रेति हे दंष्ट्राकरालवदने ! हे शिरोमालाविभूषणे ! हे चामुण्डे ! हे मुण्डमथने ! हे नारायणि ! ते नमः अस्तु दंष्ट्राभ्यां करालं वदनं यस्याः सा दंष्ट्राकरालवदना तत्सम्बोधने हे दंष्ट्राकरालवदने ! करालं भयङ्करं वदनं मुखं शिरसांमाला शिरोमाला शिरोमालाविभूषणं यस्यास्साशिरोमालाविभूषणा तत्सम्बोधने हे शिरोमाला

यणिनमोस्तुते १९ दंष्ट्राकरालवदने शिरोमालाविभूषणे ॥ चामुण्डेमुण्डमथनेनारायणिनमो
स्तुते २० लक्ष्मिलज्जेमहाविद्ये श्रद्धेपुष्टिस्वधेध्रुवे ॥ महारात्रिमहाविद्ये नारायणिनमोस्तुते २१
मेधेसरस्वतिवरे भूतिबाभ्रमितामसि ॥ नियतेत्वंप्रसीदेशे नारायणिनमोस्तुते २२ सर्व्वस्वरूपे

विभूषणे ! शिरसां मुण्डानां मुण्डं मथ्नातीति मुण्डमथना तत्सम्बोधने हे मुण्डमथने ! मुण्डं मुण्डासुरं मथ्नाति विलोडयतिते तुभ्यं नमः नमस्कारः २० लक्ष्मीति हे लक्ष्मि ! हे लज्जे ! हे महाविद्ये ! हे श्रद्धे ! हे पुष्टिस्वधे ! हे ध्रुवे ! हे महारात्रि ! हे महाविद्ये ! हे नारायणि ! ते नमः अस्तु हे महाविद्ये ! हे उपनिषत्स्वरूपे ! हे श्रद्धे ! आस्तिक्य बुद्धे ! पुष्टि सहिता स्वधा पुष्टिस्वधा तत्सम्बोधने हे पुष्टिस्वधे ! पुष्टिः उपचयः हे ध्रुवे ! हे स्थिरे ! महती चासौ रात्रिश्च महारात्रिः तत्सम्बोधने हे महारात्रि ! रात्रिः परार्द्धद्वयावसानतया प्रलयरूपा महती चासौ अविद्याच महाविद्या तत्सम्बोधने हे महाविद्ये ! अविद्या सर्व्वावरणसमर्था

महामोहः ते तुभ्यं नमः नमस्कारः २१ मेधे इति हे मेधे! हे सरस्वति! हे वरे! हे भूति! हे बाभ्रवि! हे तामसि! हे नियते! हे ईशे! हे नारायणि! त्वं प्रसीद ते नमः अस्तु! हे मेधे! हे धारणावति बुद्धे! हे सरस्वति! हे वाग्देवते! हे वरे! हे श्रेष्ठे! हे भूति! हे सत्त्वगुणप्रधाने! 'छान्दसोगुणाभावः' हे बाभ्रवि! हे रजोगुणप्रधाने! हे तामसि! हे तमोगुणप्रधाने! हे नियते! हे नियतस्वरूपे! हे प्राचीनकर्म्मस्वरूपे! हे ईशे! हे समर्थे! प्रसीद प्रसन्ना भव ते तुभ्यं नमः नमस्कारः २२ सर्व्वेति हे सर्व्व स्वरूपे! हे सर्व्वेशे! हे सर्व्वशक्ति समन्विते! हे देवि! हे दुर्ग्गे! हे देवि! त्वं नः भयेभ्यः त्राहि ते नमः अस्तु सर्व्वं स्वरूपंयस्याः

सर्व्वेशे सर्व्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहिनोदेवि दुर्ग्गेदेविनमोस्तुते २३ एतत्तेवदनंसौम्यं लोचनत्रयभूषितम् ॥ पातुनःसर्व्वभूतेभ्यः कात्यायनिनमोस्तुते २४ ज्वालाकरालमत्युग्र

सा सर्व्वस्वरूपा तत्सम्बोधने हे सर्व्वस्वरूपे! सर्व्वं विश्वं सर्व्वेषां ईशा सर्व्वेशा तत्सम्बोधने हे सर्व्वेशे! सर्व्वेषां ब्रह्मादीनां ईशा स्वामिनी सर्व्वाश्चताः शक्तयश्च सर्व्वशक्तयः सर्व्वशक्तिभिः समन्विता सर्व्वशक्तिसमन्विता तत्सम्बोधने हेसर्व्व शक्तिसमन्विते! सर्व्वाः समस्ताः शक्तयः ब्राह्मयादयः समन्विता युक्ता नः अस्मान् त्राहि रक्ष ते तुभ्यं नमः नमस्कारः देवीत्यस्य द्विरुक्तिः प्रसीद नो त्राहीत्यर्थः २३ एतदिति हे कात्यायनि! सौम्यं लोचनत्रयभूषितं ते एतत् वदनं नः सर्व्व भूतेभ्यः पातु सौम्यं मनोहरं लोचनानां त्रयंलोचनत्रयं लोचनत्रयेण भूषितं लोचनत्रयभूषितं लोचनानां नेत्राणां ते तव वदनं मुखं नः अस्मान् सर्व्वभूतेभ्यः सर्व्वभूतविकारेभ्यः यद्वा प्राणिभ्यः पातु रक्षतु तेतुभ्यं नमः नमस्कारः २४

दु०टी० ज्वालेति हे भद्रकालि ! ज्वाला करालं अत्युग्रं अशेषासुरसूदनं त्रिशूलं नः भीतेः पातु ते नमः अस्तु भद्रा चासौकाली अ०
१६७ च भद्रकाली तत्सम्बोधने हे भद्रकालि ! भद्राकल्याणदात्रीकाली कृष्णा ज्वालया करालं ज्वालाकरालं करालंभीषणं ११
अत्युग्रं अतिभयंकरं अशेषाश्चते असुराश्च अशेषासुराः अशेषासुराणां सूदनं अशेषासुरसूदनं अशेषाः समस्ताः असुराः दैत्याः सूदनं नाशकं नः अस्मान् भीतेः भयात् पातु रक्षतु ते तुभ्यं नमः नमस्कारः २५ हिनस्तीति हे देवि! या घण्टा स्वनेन जगत् आपूर्य दैत्यतेजांसि हिनस्ति साघण्टा नः पापेभ्यः पातु कः कान् इव अनः सुतान् इव स्वनेन शब्देन आ

मशेषासुरसूदनम् ॥ त्रिशूलम्पातुनोभीतेर्भद्रकालिनमोस्तुते २५ हिनास्तदैत्यतेजांसि स्वने
नापूर्य्ययाजगत् ॥ साघण्टापातुनोदेवि पापेभ्योनस्सुतानिव २६ असुरासृग्वसापङ्कचर्चितस्ते

पूर्य्य व्याप्य दैत्यानांतेजांसि दैत्यतेजांसि तानि दैत्यतेजांसि हिनस्ति नाशयति नः अस्मान् पातु रक्षतु अनः प्राणी वा माता सुतान् इव पुत्रान् इव २६ असुरेति हे चण्डिके ! असुरासृग्वसापङ्कचर्चितः करोज्ज्वलःतेखड्गःनः शुभाय भवतु वयं त्वांनताः स्म असृजश्च वसाश्चताः असृग्वसाः असुराणां असृग्वसाः असुरासृग्वसाः असुरासृग्वसानांपङ्कः असुरासृग्वसापङ्कः असुरासृग्वसापङ्केन चर्चितः असुरासृग्वसापङ्कचर्चितः असृजः रुधिराणि वसाः मज्जाः असुराणां दैत्यानां पङ्कः कर्दमः चर्चितः लिप्तःकरं उज्ज्वलयतीति करोज्ज्वलःकरं हस्तं उज्ज्वलयति प्रकाशयति यद्वा करैः उज्ज्वलः करोज्ज्वलः करैः किरणैः उज्ज्वलः दीप्यमानः ते तव खड्गः असिः नः अस्माकं शुभाय कल्याणाय नताः १६७

स्म प्रणताः स्म २७ रोगानिति हे देवि!त्वं तुष्टासती अशेषान् रोगान् अपहंसि त्वं रुष्टासती अभीष्टान् सकलान् कामा अ० न् अपहंसि तु पादपूरणे त्वां आश्रितानां नराणां विपत् न भवति त्वां आश्रिताः अन्येषां आश्रयतां हि प्रयान्ति तुष्टास ११ ती प्रसन्नासती अशेषान् समस्तान् अपहंसिनाशयसि रुष्टासती क्रुद्धासती अभीष्टान् प्रियान् सकलान समस्तान् कामा न् मनोरथान् अपहंसि नाशयसि विपत् आपत्तिः आश्रिताः जनाः अन्येषां जनानां आश्रयस्य भावः आश्रयता ताम्

करोज्ज्वलः ॥ शुभायखड्गोभवतु चण्डिकेत्वांनतावयम् २७ रोगानशेषानपहंसितुष्टा रुष्टातु कामान्सकलानभीष्टान् ॥ त्वामाश्रितानांनविपन्नराणां त्वामाश्रिताह्याश्रयताम्प्रयान्ति २८ एतत्कृतंयत्कदनंत्वयाद्य धर्म्मद्विषांदेविमहासुराणाम् ॥ रूपैरनेकैर्बहुधात्ममूर्त्तिं कृत्वाम्बिकेत त्प्रकरोतिकान्या २९ विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवाक्येषुचकात्वदन्या ॥ ममत्वगर्त्तेति

आश्रयताम् भावः धर्म्मः हीति निश्चयेन प्रयांति प्राप्नुवन्तीत्यर्थः २८ एतदिति हे देवि! अम्बिके! त्वया आत्ममूर्त्तिं अनेकैः रूपैः बहुधा कृत्वा अद्य धर्म्मद्विषां महासुराणां यत् एतत् कदनं कृतं तत् अन्या का प्रकरोति आत्मनः मूर्त्तिः आत्ममूर्त्तिः तां आत्ममूर्त्तिं आत्मनः स्वकीयस्य मूर्त्तिः तनुः रूपैः ब्रह्माण्यादिकाल्यादिलक्षणैः बहुधा बहुप्रकारं यथास्यात्तथा अद्य अधुना धर्मान् द्विषन्तीति धर्म्मद्विषः तेषाम् धर्म्मद्विषाम् द्विषन्ति नाशयन्तिमहासुराणां महादैत्यानां कदनंनाशः तत् कदनं अन्यात्वदितरा का २९ विद्यास्विति हे देवि! विद्यासुशास्त्रेषु विवेकदीपेषु किंच आद्येषु वाक्येषु

दु०टी० सत्सु ममत्वगर्ते अति महान्धकारे त्वदन्या का एतत् विश्वं अतीव विभ्रामयति न कापीत्यर्थः विद्यासु ज्ञानेषु शास्त्रेषुम अ०
१६६ न्वाद्युक्तिषु विवेकदीपेषु उपनिषत्सु आद्येषु वाक्येषु कर्म्मकाण्डपरिवेदवाक्येषु सत्सु ममत्वंगर्त्तो यस्मिन् सः ममत्व ११
गर्त्तः तस्मिन् ममत्वगर्त्ते अति महान् अन्धकारो यस्मिन् सः अति महान्धकारः तस्मिन् अतिमहान्धकारे संसारे त्वत्
अन्या त्वदन्या का विश्वं जगत् अतीव अत्यन्तमेव तं विभ्रामयति ३० रक्षांसीति हे देवि! यत्र रक्षांसि तिष्ठन्ति यत्र उग्र
विषाः नागाः तिष्ठन्ति किञ्च यत्र अरयः तिष्ठन्ति यत्र दस्युबलानि तिष्ठन्ति यत्र दावानलः तिष्ठति तथा अब्धिमध्ये

महान्धकारे विभ्रामयत्येतदतीवविश्वम् ३० रक्षांसियत्रोग्रविषाश्चनागा यत्रारयोदस्युबलानि
यत्र ॥ दावानलोयत्रतथाब्धिमध्येतत्रस्थितात्वंपरिपासिविश्वम् ३१ विश्वेश्वरीत्वंपरिपासिवि

यत्र और्व्वाग्न्यादयः तिष्ठन्ति तत्र त्वं स्थिता सती विश्वं परिपासि रक्षांसि राक्षसाः उग्रं विषं येषांते उग्रविषाः उग्रंम
हत् नागाः सर्प्पाः अरयः शत्रवः दस्यूनां बलानि दस्युबलानि दस्यूनां चौराणां बलानि सैन्यानि दावस्य अनलः दावा
नलः दावस्य वनस्य अनलः अग्निः अब्धिमध्ये समुद्रमध्ये विश्वं जगत् परिपासि रक्षसि ३१ विश्वेश्वरीति हे देवि!
यतः त्वं विश्वेश्वरी भवसि अतः त्वं विश्वं परिपासि यतः त्वं विश्वात्मिका भवसि इति त्वं विश्वंधारयसि यतः भवती
विश्वेशवन्द्या भवति अतः त्वयि ये भक्ति नम्राः भवन्ति अतः ते विश्वाश्रयाः भवन्ति यतः यस्मात् कारणात् विश्वस्य
ईश्वरी विश्वेश्वरी विश्वस्य जगतः ईश्वरी स्वामिनी अतः अस्मात् कारणात् विश्वं जगत् परिपासि रक्षसि विश्वं १६६

दु०टी० आत्मा यस्याः सा विश्वात्मिका विश्वं जगत् आत्मा स्वरूपं इति हेतोः विश्वं जगत् धारयसि यतः यस्मात् कारणा अ०
१७० त् विश्वेशानां वन्द्या विश्वेशवन्द्या विश्वेशानां ब्रह्मादीनां वन्द्या स्तुत्या अतः अस्मात्कारणात् ये जनाः भक्त्या नम्राः ११
भक्तिनम्राः नम्राः नम्रीभूताः ते जनाः विश्वस्य आश्रयाः विश्वाश्रयाः विश्वस्य जगतः आश्रयाः आश्रयीभूताः ३२
देवीति हे देवि ! त्वं प्रसीद नः सद्यः नित्यं अरिभीतेः परिपालय यथा अधुनैव असुरवधात् पालितवती असि तथेत्यर्थः
सर्व्वजगतां पापानि आशु प्रशमं नय किञ्च उत्पातपाकजनितान्महोपसर्गान् प्रशमं नय प्रसीद प्रसन्ना भव नः

त्वं विश्वात्मिकाधारयसीतिविश्वम्॥ विश्वेशवन्द्याभवतीभवन्तिविश्वाश्रयायेत्वयिभक्तिनम्राः ३२
देवीप्रसीदपरिपालयनोरिभीतेर्नित्यंयथासुरवधादधुनैवसद्यः॥ पापानिसर्व्वजगताम्प्रशमन्नया
शुउत्पातपाकजनितांश्चमहोपसर्गान् ३३ प्रणतानाम्प्रसीदत्वन्देविविश्वार्त्तिहारिणि॥ त्रैलोक्य

अस्मान् सद्यः क्षणमात्रेण नित्यं सर्व्वदा अरिभीतेः शत्रुभयात् परिपालय रक्ष अधुनैव सम्प्रत्येव असुरस्य वधः असुर
वधः तस्मात् असुरवधात् असुरस्य दैत्यस्य शुम्भस्यवधः नाशः सर्व्वाणिच तानि जगन्तिच सर्व्वजगन्ति तेषां सर्व्व
जगतां सर्व्वाणि समस्तानि जगन्ति लोकाः आशु शीघ्रं प्रशमं शान्तिं नय प्रापय उत्पातानां पाकः उत्पातपाकः उत्पा
तपाकेन जनिताः उत्पातपाकजनिताः तान् उत्पातपाकजनितान् पाकः फलदानकालः जनिताः उत्पन्नाः महोपसर्गान्
पापादीन् प्रशमं शान्तिं नय प्रापय ३३ प्रणतानामिति हे देवि ! हे विश्वार्त्तिहारिणि ! हे ईड्ये ! त्रैलोक्यवासिनां प्रणतानां १७०

लोकानां त्वं प्रसीद किञ्च वरदा भव विश्वस्य आर्त्तिः विश्वार्त्तिः विश्वार्त्तिं हरतीति विश्वार्त्तिहारिणी तत्सम्बोधने हे
विश्वार्त्तिहारिणि ! विश्वस्य जगतः आर्त्तिः पीडा हे ईड्ये! हे स्तुत्ये! त्रयोलोकास्तेषांभावः त्रैलोक्यं त्रैलोक्ये वासिनः त्रै
लोक्यवासिनः तेषां त्रैलोक्यवासिनां प्रणतानां नम्रीभूतानां लोकानां जनानां वरं ददातीति वरदा वरं वरदानम् ३४
देव्युवाच ॥ वरदेति हे सुरगणाः ! अहं वरदा भवामि यूयं यं वरं मनसा इच्छथ जगतां उपकारकं तं वरं वृणुध्वं अहंप्रय
च्छामि सुराणां गणाः सुरगणाः तत्सम्बोधने हे सुरगणाः ! सुराणां देवानां गणाः समूहाः वरं ददातीति वरदा वरं वरदानं

वासिनामीड्येलोकानांवरदाभव ३४ देव्युवाच ॥ वरदाहंसुरगणावरंयंमनसेच्छथ ॥ तंवृणुध्वंप्रय
च्छामिजगतामुपकारकम् ३५ देवाऊचुः ॥ सर्व्वाबाधाप्रशमनंत्रैलोक्यस्याखिलेश्वरि ॥ एवमेवत्व
याकार्य्यमस्मद्वैरिविनाशनम् ३६ देव्युवाच ॥ वैवस्वतेन्तरेप्राप्तेअष्टाविंशतिमेयुगे ॥ शुम्भोनिशु

जगतां लोकानां तं वरं वृणुध्वं प्रार्थयध्वं प्रयच्छामि ददामि ३५ ॥ देवाऊचुः ॥ सर्व्वाबाधेति हे अखिलेश्वरि ! त्वया त्रै
लोक्यस्य सर्व्वाबाधाप्रशमनं अस्मत् वैरि विनाशनं एवं एव कार्य्यं हे अखिलेश्वरि ! हे समस्तेश्वरि ! सर्व्वा चासौ
बाधाच सर्व्वाबाधा सर्व्वाबाधायाः प्रशमनं सर्व्वाबाधाप्रशमनं सर्व्वा समस्ता बाधा पीडा प्रशमनं शान्तिकं अस्मत्
अस्माकं 'षष्ठ्यर्थे पञ्चमी' वैरिणां विनाशनं वैरिविनाशनं वैरिणां शत्रूणां एवं एव शुम्भादिनाशवत् एव कार्य्यं कर्त्तव्यं
३६ ॥ देव्युवाच ॥ वैवस्वत इति हे सुराः ! वैवस्वते अन्तरे अष्टाविंशतिमेयुगे प्राप्ते सति शुम्भः किञ्च निशुम्भः एव अन्यौ

 महासुरौ उत्पत्स्येते वैवस्वते अन्तरे वैवस्वतमन्वन्तरे अष्टाविंशतिमे अष्टाविंशति संख्याके युगे चतुर्युगे महासुरौ 
 महादैत्यौ ३७ नन्देति हे सुराः! ततः नन्दगोपगृहेजाता यशोदागर्भसम्भवा अहं विन्ध्याचलनिवासिनी सती तौ 
नाशयिष्यामि ततः तदनन्तरं शुम्भनिशुम्भोत्पत्त्यनन्तरं नन्दगोपस्य गृहं नन्दगोपगृहं तस्मिन् नन्दगोपगृहे यशोदायाः
गर्भः यशोदागर्भः यशोदागर्भे सम्भवो यस्याः सा यशोदागर्भसम्भवा सम्भवः प्रादुर्भावः विन्ध्याचलनिवासिनी वि

म्भश्चैवान्यावुत्पत्स्येतेमहासुरौ ३७ नन्दगोपगृहेजातायशोदागर्भसम्भवा ॥ ततस्तौनाश
यिष्यामिविन्ध्याचलनिवासिनी ३८ पुनरप्यतिरौद्रेणरूपेणपृथिवीतले ॥ अवतीर्य्यहनिष्या
मिवैप्रचित्तांस्तुदानवान् ३९ भक्षयन्त्याश्चतानुग्रान्वैप्रचित्तान्महासुरान् ॥ रक्तादन्ताभविष्य
न्तिदाडिमीकुसुमोपमाः ४० ततोमान्देवताःस्वर्गेमर्त्यलोकेचमानवाः ॥ स्तुवन्तोव्याहरिष्य

न्ध्यपर्वतनिवासिनी तौ शुम्भनिशुम्भौ ३८ पुनरपीति हे सुराः! अहंपुनः अतिरौद्रेण अपि रूपेण पृथिवीतले अवतीर्य
वैप्रचित्तान् दानवान् हनिष्यामि अतिरौद्रेण अतिभयङ्करेण रूपेण स्वरूपेण वैप्रचित्तान् विप्रचित्तिवंशोद्भवान् ३९
भक्षयन्त्या इति हे सुराः! उग्रान् वैप्रचित्तान् तान् महासुरान् भक्षयन्त्याः मम दाडिमीकुसुमोपमाः रक्ताः दन्ताः भ
विष्यन्ति उग्रान् भयङ्करान् वैप्रचित्तान् विप्रचित्तिवंशजातान् तान् प्रसिद्धान् महासुरान् महादैत्यान् भक्षयतीति भक्षय
न्ती तस्याः भक्षयन्त्याः दाडिम्याः कुसुमं दाडिमीकुसुमं दाडिमीकुसुमं उपमा येषान्ते दाडिमीकुसुमोपमाः कुसुमं पुष्पं 

उपमा उपमानं रक्ताः लोहितवर्णाः ४० तत इति हे सुराः! ततः स्वर्गेदेवताः किंच मर्त्यलोके मानवाः मां सततं स्तुव न्तः सन्तः रक्तदन्तिकाम् व्याहरिष्यन्ति ततः तदनन्तरं रक्तदन्तिकाप्रादुर्भावानन्तरं सततं निरन्तरं व्याहरिष्यन्ति कथयिष्यन्ति ४१ भूयश्चेति हे सुराः! भूयः शतवार्षिक्यां अनावृष्ट्यां सत्यां अनम्भसि भूमौ मुनिभिः संस्तुता अहं अयोनिजा संभविष्यामि भूयः पुनः शतवर्षाणि प्रमाणं यस्याः सा शतवार्षिकी तस्यां शतवार्षिक्यां न आवृष्टिः अना वृष्टिः तस्यां अनावृष्ट्यां अनम्भसि कूपादिजलशून्यायाम् भूमौ पृथिव्यां अयोनिजा स्वयंभूः ४२ तत इति हे सुराः! ततः



न्तिसततंरक्तदन्तिकाम् ४१ भूयश्चशतवार्षिक्यामनावृष्ट्यामनम्भसि ॥ मुनिभिःसंस्तुताभू मौसम्भविष्याम्ययोनिजा ४२ ततःशतेननेत्राणांनिरीक्षिष्यामियन्मुनीन् ॥ कीर्त्तयिष्यन्तिमनु जाः शताक्षीमितिमान्ततः ४३ ततोहमखिलंलोकमात्मदेहसमुद्भवैः ॥ भरिष्यामिसुराःशाकैराट्ट

अहंयत् मुनीन् नेत्राणां शतेन निरीक्षिष्यामि ततः मनुजाः मां शताक्षीं इति कीर्तयिष्यन्तिततः तदनन्तरं अयोनिजा म त्प्रादुर्भावानन्तरं यत् यस्मात् कारणात् ततः तस्मात्कारणात् मनुजाः मनुष्याः शतानि अक्षीणि यस्याः सा शताक्षी ताम् शताक्षीम् कीर्तयिष्यन्ति कथयिष्यन्ति ४३ तत इति हे सुराः! ततः अहं आत्मदेहसमुद्भवैः आवृष्टेः प्राणधारकैः शाकैः अखिलं लोकं भरिष्यामि ततः तदनन्तरं शताक्षी मत्प्रादुर्भावानन्तरं आत्मनः देहः आत्मदेहः आत्मदेहात् समुद्भवो येषां ते आत्मदेहसमुद्भवाः तैः आत्मदेहसमुद्भवैः समुद्भवः प्रादुर्भावः आवृष्टेः वृष्टिपर्यन्तं प्राणस्यधारकाः प्राणधारकाः तैः

 प्राणधारकैः अखिलं समस्तं लोकंजनं भरिष्यामि पोषयिष्यामि ४४ शाकम्भरीति हेसुराः! तदाअहंभुवि शाकम्भरी इति
 विख्यातिं यास्यामि तत्रैवच दुर्गमाख्यं महासुरं वधिष्यामि तदा तस्मिन्काले भुवि पृथिव्यां शाकंबिभर्तीति शाकम्भरी 
बिभर्ति धारयति विख्यातिं प्रसिद्धिं यास्यामि प्राप्स्यामि तत्रैवचशाकम्भर्यवतार एव दुर्गम इति आख्यायस्य सः दुर्गमा 
ख्यः तंदुर्गमाख्यं आख्या नाम महासुरं महादैत्यम्४५दुर्गादेवीति हे सुराः! दुर्गादेवी इति विख्यातं तत् मेनाम भविष्यति

ष्टेःप्राणधारकैः ४४ शाकम्भरीतिविख्यातिन्तदायास्याम्यहंभुवि ॥ तत्रैवचवधिष्याम्दुर्ग
माख्यंमहासुरम् ४५ दुर्गादेवीतिविख्यातंतन्मेनामभविष्यति ॥ पुनश्चाहंयदाभीमंरूपंकृ
त्वाहिमाचले ४६ रक्षांसिभक्षयिष्यामिमुनीनांत्राणकारणात् ॥ तदामाम्मुनयःसर्व्वेस्तोष्यन्त्या
नम्रमूर्तयः ४७ भीमादेवीतिविख्यातंतन्मेनामभविष्यति ॥ यदारुणाख्यस्त्रैलोक्येमहाबाधाङ्क

पुनः अहं यदा हिमाचले भीमं रूपं कृत्वा मुनीनां त्राणकारणात् रक्षांसि भक्षयिष्यामि ततः सर्वे मुनयः आनम्रमूर्त्तयः
सन्तः मांस्तोष्यन्ति दुर्गादेवी इति विख्यातं प्रसिद्धं मे मम भीमं भयंकरं त्राणस्य कारणं त्राणकारणं तस्मात् त्राण
कारणात् त्राणस्य रक्षणस्य कारणं हेतुः रक्षांसि राक्षसान् भक्षयिष्यामि नाशयिष्यामि आनम्रा मूर्त्तिर्येषांते आनम्र
मूर्त्तयः आनम्रा नम्रीभूता मूर्तिः तनुः ४६ । ४७ भीमेति हे सुराः! भीमादेवी इति विख्यातं मे तत् नाम भविष्यति यदा 

त्रैलोक्ये अरुणाख्यः महाबाधां करिष्यति ४८ तदा अहं असंख्येयषट्पदं भ्रामरं रूपं कृत्वा त्रैलोक्यस्य हितार्थाय महा 
सुरं वधिष्यामि विख्यातं प्रसिद्धं मे मम त्रयोलोकाः तेषांभावः त्रैलोक्यं तस्मिन् त्रैलोक्ये अरुणाख्यः अरुणनामा महासुरः
महतीचासौ बाधाच महाबाधा ताम महाबाधाम् बाधा पीडा षट्पदगनियस्यतत् षट्पदं संख्यातुं योग्यं संख्येयं न
संख्येयं असंख्येयं असंख्येयश्च तत् षट्पदञ्च असंख्येयषट्पदं तत् असंख्येयषट्पदं पदानि चरणाः भ्रमरस्येइदं

रिष्यति ४८ तदाहम्भ्रामरंरूपंकृत्वासङ्ख्येयषट्पदम् ॥ त्रैलोक्यस्यहितार्थायवधिष्यामिमहा
सुरम् ४९ भ्रामरीतिचमांलोकास्तदास्तोष्यन्तिसर्व्वतः ॥ इत्थंयदायदाबाधादानवोत्थाभविष्य
ति ५० तदातदावतीर्य्याहंकरिष्याम्यरिसंक्षयम् ५१ इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्त
रेदेवीमाहात्म्येनारायणीस्तुतिर्नामएकादशोऽध्यायः ११ ॥ ० ॥ ० ॥ ० ॥

भ्रामरं तत्भ्रामरं रूपं स्वरूपम् ४९ भ्रामरीति हेसुराः।तदालोकाः सर्व्वतः भ्रामरी इति मां स्तोष्यन्ति इत्थं यदा यदा दान
वोत्था बाधा भविष्यति तदा तदा अवतीर्य्य अहं अरिसंक्षयं करिष्यामि लोकाः जनाः सर्व्वतः सर्व्वत्र दानवात्
उत्था दानवोत्था उत्था उत्पन्ना बाधा पीडा अवतीर्य्य अवतारं गृहीत्वा अरीणां संक्षयः अरिसंक्षयः तं अरिसं
क्षयं अरीणां शत्रूणां संक्षयः नाशः ५० । ५१ इति श्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेनारायणीस्तुतिर्नामै
कादशोऽध्यायः ११ ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

देव्युवाच ॥ एभिरिति हे देवाः! यः समाहितः सन् नित्यं मां एभिः स्तवैः स्तोष्यते तस्य अहं सकलां बाधां असंशयं यथास्यात्तथाशमयिष्यामि यः पुरुषः समाहितः सन अनन्यमनाः सन् नित्यं सर्व्वदा एभिः मधुकैटभवधादिलक्षणैः स्तवैः स्तवनैः तस्य पुरुषस्य सकलांऐहिकीं पारलौकिकीञ्च बाधां उपद्रवं नास्ति संशयो यस्मिन् कर्म्मणि तत् असंशयं यथास्यात्तथा शमयिष्यामि नाशयिष्यामि १ तदेवाहमाध्वेति हे देवाः! ये एकचेतसः सन्तः अष्टम्यां किञ्च चतुर्दश्यां किञ्च नवम्यां मधुकैटभनाशं किञ्च महिषासुरघातनं तद्वत् शुम्भनिशुम्भयोः वधं कीर्त्तयिष्यन्तिकिञ्चये उत्तमं मम

देव्युवाच ॥ एभिःस्तवैश्चमांनित्यंस्तोष्यतेयःसमाहितः ॥ तस्याहंसकलाम्बाधांशमयिष्या
म्यसंशयम् १ मधुकैटभनाशञ्चमहिषासुरघातनम् ॥ कीर्त्तयिष्यन्तियेतद्वद्वधंशुम्भनिशुम्भ
योः २ अष्टम्याञ्चचतुर्दश्यान्नवम्याञ्चैकचेतसः॥श्रोष्यन्तिचैवयेभक्त्याममामाहात्म्यमुत्तमम् ३

माहात्म्यं भक्त्या श्रोष्यन्ति एव तेषां किञ्चित् दुष्कृतं न भविष्यति किञ्च दुष्कृतोत्थाः आपदः न भविष्यन्ति किञ्च दारिद्र्यं एव न भविष्यति इष्टवियोजनं न भविष्यति ये पुरुषाः एकचेतसः सन्तः अनन्यचेतसः सन्तः मधुश्च कैटभश्च तौ मधुकैटभौ मधुकैटभयोः नाशः मधुकैटभनाशः तं मधुकैटभनाशं महिषासुरस्य घातनं महिषासुरघातनं तत् महिषासुरघातनं घातनं नाशः तद्वत् तथैव शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोःशुम्भनिशुम्भयोः कीर्त्तयिष्यन्ति पठिष्यन्ति ये पुरुषाः उत्तमं श्रेष्ठं माहात्म्यं चरितं तेषां पुरुषाणां किञ्चित् किमपि दुष्कृतं पापं न भविष्यति दुष्कृतात् उत्थाः दुष्कृतो

दु०टी० तथाः दुष्कृतात् पापात् उत्थाः उत्पन्नाः आपदः आपत्तयः न भविष्यन्ति इष्टस्य वियोजनं इष्टवियोजनं मित्रवियोगं अ०
१७७ न भविष्यति २।३।४ शत्रुत इति हे देवाः! तस्य दस्युतः भयं न भविष्यति राजतः वा भयं न भविष्यति शस्त्रानल १२
तोयौघात् भयं न भविष्यति शत्रुतः भयं न भविष्यति कदाचित् सम्भविष्यति तस्मात् जनैः समाहितैः सद्भिः परम्महत्
स्वस्त्ययनं मम एतत् माहात्म्यं भक्त्या सदा पठितव्यं किञ्च श्रोतव्यं तस्य पुरुषस्य दस्युतः चौरात् शस्त्रश्च अनलश्च

नतेषांदुष्कृतंकिञ्चिद्दुष्कृतोत्थानचापदः॥ भविष्यतिनदारिद्र्यंनचैवेष्टवियोजनम् ४ शत्रुतोनभ
यंतस्य दस्युतोवानराजतः॥ नशस्त्रानलतोयौघात्कदाचित्सम्भविष्यति ५ तस्मान्ममैतन्माहा
त्म्यं पठितव्यंसमाहितैः॥ श्रोतव्यञ्चसदाभक्त्यापरंस्वस्त्ययनंहितत् ६ उपसर्गानशेषांस्तुम
हामारीसमुद्भवान्॥ तथात्रिविधमुत्पातंमाहात्म्यंशमयेन्मम ७ यत्रैतत्पठ्यतेसम्यङ्नित्यमाय

तोयश्च तानि शस्त्रानलतोयानि शस्त्रानलतोयानां ओघः शस्त्रानलतोयौघः तस्मात् शस्त्रानलतोयौघात् अनलः अग्निः
तोयं जलं ओघः समूहः तस्मात् कारणात् समाहितैः सद्भिः अनन्यचित्तैः सद्भिः परं अत्यन्तं स्वस्तेः अयनं स्वस्त्ययनं
स्वस्तेः कल्याणस्य अयनं मार्गम् ५।६ उपैति हे देवाः! मम माहात्म्यं महामारीसमुद्भवान् अशेषान् उपसर्गान् तथा त्रि
विधं उत्पातं शमयेत् माहात्म्यं चरितं महामार्याः समुद्भवो येषां ते महामारी समुद्भवाः तान् महामारीसमुद्भवान् महा
मार्याः श्रामर्यशभूतायाः महाजनक्षयकरी देवतायाः समुद्भवः प्रादुर्भावः अशेषान् समस्तान् उपसर्गान् उपद्रवान् १७७

 त्रिविधं व्याधिरागद्वेषादिरूपं आध्यात्मिकं भूतं प्रेतादिजं भयं आधिभौतिकं दैवकृतवज्रपातदारिद्र्याद्याधिदैविकं 
 तद्रूपं उत्पातं अनिष्टं दिव्यं भौमान्तरिक्षं चेति ७ यत्रेति हे देवाः! यत्रयेन मम आयतने नित्यं सम्यक् पठ्यते अहंतन्न 
विमोक्ष्यामि तत्र मे सदा सान्निध्यं स्थितं भवति येन पुरुषेण यत्र यस्मिन् आयतने गृहेनित्यं सर्व्वदा सम्यक् अर्थाव
धारणादिपूर्व्वकं अस्खलितवर्णादिच तत् आयतनं गृहं न तद्विमोक्ष्यामि न त्यक्ष्यामि तत्र तस्मिन् आयतने गृहे
मे मम सदा सर्व्वदा सान्निध्यं नैकट्यम् ८ बलीति हे देवाः! जनैः बलिप्रदाने पूजायां अग्निकार्य्ये महोत्सवे सर्व्वं मम

तनेमम ॥ सदानतद्विमोक्ष्यामि सान्निध्यंतत्रमेस्थितम् ८ बलिप्रदाने पूजायामग्निकार्य्येमहो
त्सवे ॥ सर्व्वंममैतच्चरितमुच्चार्य्यं श्राव्यमेवच ६ जानताजानतावापि बलिपूजांतथाकृताम् ॥ प्र
तीच्छिष्याम्यहंप्रीत्या वह्निहोमंतथाकृतम् १० शरत्कालेमहापूजा क्रियतेयाचवार्षिकी ॥ तस्यां

एतत् चरितं उच्चार्य्यं किञ्च श्राव्यं एव बलिप्रदाने देवतोद्देशेन पश्वाद्युपहारे पूजायां गन्धादिनार्चायां अग्निकार्ये देवी
देवतयोर्होमे महोत्सवे पुत्रजन्मविवाहादौ उच्चार्य्यं पठनीयं श्राव्यं एव श्रवणीयं एव उच्चार्य्यमिति द्विजविषयम् ६
तत्फलमाह जानतेति हे देवाः! अहं जानता वा अजानता अपि तथा कृतां बलिपूजां तथा कृतं वह्निहोमं प्रीत्या प्र
तीच्छिष्यामि जानता विधिज्ञेन पुरुषेण वा अथवा अजानता अविधिज्ञेन पुरुषेण तथा वैधप्रकारेण बलिसहिता पूजा
बलिपूजा ताम् बलिपूजाम् तथा वैधा वैधप्रकारेण वह्नौ होमः वह्निहोमः तं वह्निहोमं वह्नौ अग्नौ होमः हवनं 

 प्रतीच्छिष्यामि अङ्गीकरिष्यामीत्यर्थः 'चवर्गमध्यः धातुगणे बाहुलकोक्तेः प्रतीच्छ धातुग्रहणार्थः' १० शरदिति हे 
 देवाः! जनैः शरत्काले वार्षिकीया महापूजा क्रियते तस्यां मनुष्यः भक्तिसमन्वितःसन् मम एतत् माहात्म्यं श्रुत्वा स
र्व्वाबाधाविनिर्मुक्तः धनधान्यसुतान्वितः मत्प्रसादेन भविष्यति अत्र संशयः न भवति शरत्काले आश्विनशुक्लप्रति 
पदमारभ्य नवम्यन्ते वार्षिकी वर्षे भवा वार्षिकी महापूजा दुर्गोत्सवरूपा तस्यां महापूजायां भक्त्या समन्वितः भक्ति
समन्वितः समन्वितः युक्तः माहात्म्यं चरितं सर्व्वाचासौ बाधाच सर्व्वाबाधा सर्व्वाबाधया विनिर्मुक्तः सर्व्वाबाधावि

ममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वितः ११ सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ॥ मनुष्यो
मत्प्रसादेन भविष्यतिनसंशयः १२ श्रुत्वाममैतन्माहात्म्यं तथाचोत्पत्तयःशुभाः ॥ पराक्रमंच
युद्धेषुजायतेनिर्भयःपुमान् १३ रिपवःसंक्षयंयान्ति कल्याणंचोपपद्यते ॥ नन्दतेचकुलंपुंसां मा

निर्मुक्तः सर्व्वा समस्ता बाधा उपद्रवता विनिर्मुक्तः रहितः धनञ्च धान्यंच सुतश्च ते धनधान्यसुताः धनधान्यसुतैः
अन्वितः धनधान्यसुतान्वितः धनं द्रव्यं धान्यं सस्यादि सुतः पुत्रः अ[illegible]ः युक्तः ममप्रसादः मत्प्रसादः तेन मत्प्रसा
देन प्रसादः प्रसन्नता अत्र अस्मिन् विषये संशयः संदेहः श्रुत्वेति पठनस्य[illegible]पलक्षणम् एवमन्यत्रापि बोध्यम् ११।१२
श्रुत्वेति हे देवाः! यः पुमान् मम एतत् माहात्म्यं श्रुत्वा शुभाः उत्पत्तयः प्रा[illegible]ते तथाच पराक्रमं प्राप्नोति किंच युद्धेषु
निर्भयः जायते माहात्म्यं चरितं शुभाः शुभकारिकाः उत्पत्तयः उत्पत्तीः प्रादु[illegible]ान् 'द्वितीयार्थे प्रथमा' युद्धेषु संग्रामेषु 

 उपपद्यते किंच कुलंनन्दते माहात्म्यं चरितं शृण्वन्तीति शृण्वन्तः तेषां शृण्वताम् पुंसाम् पुरुषाणां रिपवः शत्रवः संक्षयं १२
नाशं यान्ति प्राप्नुवन्ति उपपद्यते प्राप्यते नन्दते वर्द्धते १४ शान्तीति हे देवाः शान्तिकर्मणि तथा सर्वत्र दुःस्वप्न दर्शने
किंच उग्रासुग्रहपीडासु मम माहात्म्यं शृणुयात् शान्तिकर्म्मणि उपसर्गादिनिवर्तके कर्मणि दुष्टंच तत् स्वप्नंच

हात्म्यंममशृण्वताम् १४ शान्तिकर्म्मणिसर्व्वत्र तथादुःस्वप्नदर्शने ॥ ग्रहपीडासुचोग्रासु मा
हात्म्यंशृणुयान्मम १५ उपसर्गाःशमंयान्तिग्रहपीडाश्चदारुणाः ॥ दुःस्वप्नंचनृभिर्दृष्टं सुस्वप्न
मुपजायते १६ बालग्रहाभिभूतानांबालानांशान्तिकारकम् ॥ संघातभेदेचनृणां मैत्रीकरणमुत्त
मम् १७ दुर्वृत्तानामशेषाणां बलहानिकरंपरम् ॥ रक्षोभूतपिशाचानांपठनादेवनाशनम् १८

दुःस्वप्नं दुःस्वप्नस्य दर्शनं दुःस्वप्नदर्शनं तस्मिन् दुःस्वप्नदर्शने उग्रासु महतीषु ग्रहाणां पीडाः ग्रहपीडाः तासु ग्रहपीडा
सुमाहात्म्यं चरितम् १५ तदेवविवृणोति उपसर्गा इति हे देवाः! मम चरिते कीर्त्तिते सति उपसर्गाः शमंयान्ति किंच दा
रुणाः ग्रहपीडाः शमंयान्ति किंचनृभिः दृष्टंदुःस्वप्नं सुस्वप्नं उपजायते कीर्त्तिते सति उच्चारिते सति उपसर्गाः उपद्रवाः
शमं शान्तिं यान्ति प्राप्नुवन्ति १६ बालग्रहेति हे देवाः! मम माहात्म्यं बालग्रहाभिभूतानां बालानां शान्तिकारकं भवति
किंच नृणां संघातभेदे उत्तमं मैत्री करणं भवति बालग्रहैः अभिभूताः बालग्रहाभिभूताः तेषां बालग्रहाभिभूतानाम् 

बालग्रहैः पूतनादिभिः अभिभूताः पीडिताः नृणां मनुष्याणां सङ्घातभेदे मैत्रीविघट्टने उत्तमं श्रेष्ठम् १७ दुर्वृत्तानामिति अ० हे देवाः! मम माहात्म्यपठनात् एव अशेषाणां दुर्वृत्तानां परं बलहानिकरं भवति किंच रक्षोभूतपिशाचानां नाशनं भ १२ वति अशेषाणां समस्तानां दुर्वृत्तानां दुष्टानां व्याघ्रशूकरादीनाम् परं अत्यन्तं रक्षश्च भूतश्च पिशाचश्च ते रक्षोभूत पिशाचाः तेषां रक्षोभूतपिशाचानाम् १८ सर्व्वमिति हे देवाः! सर्व्वमम एतत् माहात्म्यं ममसन्निधिकारकम् भवति पशु पुष्पार्घधूपैः तथाच उत्तमैः गन्धदीपैः विप्राणां भोजनैः होमैः प्रोक्षणीयैः किंच अन्यैः विविधैः भोगैः प्रदानैः अहर्निशं

सर्व्वंममैतन्माहात्म्यंममसन्निधिकारकम् ॥ पशुपुष्पार्घधूपैश्चगन्धदीपैस्तथोत्तमैः १९ विप्रा णांभोजनैर्होमैःप्रोक्षणीयैरहर्निशम् ॥ अन्यैश्चविविधैर्भोगैःप्रदानैर्वत्सरेणया २० प्रीतिर्मेक्रिय तेसास्मिन्सकृत्सुचरितेश्रुते ॥ श्रुतंहरतिपापानितथारोग्यंप्रयच्छति २१ रक्षाङ्करोतिभूतेभ्यो

क्रियमाणैः सद्भिः यावत्सरेण मे प्रीतिर्भवति सा अस्मिन् सुचरिते सकृत् श्रुते सति जनैः क्रियते श्रुतं पापानि हरति तथा आरोग्यं प्रयच्छति सर्वं समस्तं माहात्म्यं चरितं संनिधिकारकं निकटकारकं भवति पशुश्च पुष्पश्च अर्घश्चधूप श्च ते पशुपुष्पार्घधूपाः तैः पशुपुष्पार्घधूपैः पशुः बलिः अर्घः अष्टांगः 'आपःक्षीरंकुशाग्राणि दध्यक्षततिलानि च । यवाः सिद्धार्थकाश्चैव अष्टांगोऽर्घःप्रकीर्तितः ।' उत्तमैः श्रेष्ठैः गन्धाश्च दीपाश्च ते गन्धदीपाः तैः गन्धदीपैः विप्राणां ब्राह्मणा नां प्रोक्षणीयैः पञ्चामृताभिषेकादिभिः विविधैः अनेकैः भोगैः स्रगादिभिः प्रदानैः मदुद्देशेन विप्रेभ्यो दीयमानैः वा

दु०टी० सोलङ्कारादिभिः अहर्निशं अहोरात्रं मे मनसा प्रीतिः सुचरिते माहात्म्ये सकृत् एकवारम् १६ । २० । २१ रक्षां करो अ०
१८२ तीति हे देवाः! मम जन्मनां कीर्तनं भूतेभ्यः रक्षां करोति युद्धेषु दुष्टदैत्यनिवर्हणं मे यत् चरितं भवति तस्मिन् श्रुते सति १२
पुंसाम् वैरिकृतं भयं न जायते भूतेभ्यः प्राणिभ्यः युद्धेषु संग्रामेषु दुष्टश्चासौ दैत्यश्च दुष्टदैत्यः दुष्टदैत्यस्य निबर्हणं दुष्टदैत्य
निबर्हणम् दुष्टदैत्यस्य शुम्भस्य निबर्हणं नाशकं मे मम तस्मिन् चरिते पुंसाम् पुरुषाणां वैरिभिः कृतं वैरिकृतं वैरिभिः

जन्मनांकीर्त्तनंमम ॥ युद्धेषुचरितंयन्मे दुष्टदैत्यनिबर्हणम् २२ तस्मिञ्छ्रुतेवैरिकृतं भयंपुंसांन
जायते ॥ युष्माभिस्तुतयोयाश्च याश्चब्रह्मर्षिभिःकृताः २३ ब्रह्मणाचकृतास्तास्तुप्रयच्छन्ति
शुभांमतिम् ॥ अरण्येप्रान्तरेवापि दावाग्निपरिवारितः २४ दस्युभिर्वावृतःशून्ये गृहीतोवापि
शत्रुभिः ॥ सिंहव्याघ्रानुयातोवा वनेवावनहस्तिभिः २५ राज्ञाक्रुद्धेनचाज्ञप्तो वध्योबन्धगतो

शत्रुभिः युष्माभिरिति हे देवाः! युष्माभिः याः स्तुतयः कृताः किंच ब्रह्मर्षिभिः याः स्तुतयः कृताः २२ । २३ किंच ब्रह्मणा
च याः स्तुतयः कृताः ताः शुभांमतिं प्रयच्छन्ति स्तुतयः नारायणीसूक्तरूपाः देवीसूक्तरूपाश्च स्तुतयः महिषान्तकरी
सूक्तरूपाः स्तुतयः त्वं स्वाहेत्यादिरात्रिसूक्तरूपाः कृताः ताः स्तुतयः शुभां मोक्षाभ्युदयसाधिनीं मतिं बुद्धिं प्रय
च्छन्ति ददति अरण्येत्यादि श्लोकचतुष्टयमेकान्वयं अरण्ये दावाग्निपरिवारितः प्रान्तरे वा दस्युभिः वृतः शून्ये वा शत्रु
भिः गृहीतः वने वा सिंहव्याघ्रानुयातः वनहस्तिभिः वृतः २४ । २५ क्रुद्धेन राज्ञा वध्यः इति आज्ञप्तः बन्धगतः अपि १८२

 वा महार्णवे पोतेस्थितः अतएव वातेन आघूर्णितः भृशदारुणेसंग्रामे पतत्सु अपि शस्त्रेषु घोरासु सर्व्वाबाधासु वेदना 
भ्यर्दितः अपि वा नरः ममएतत् चरितं स्मरन् सन् सङ्कटात् मुच्यते अरण्ये विपिने दावाग्निना परिवारितः दावाग्नि
परिवारितः दावाग्निना वनाग्निना परिवारितः वेष्टितः प्रान्तरेदूरशून्ये मार्गे दस्युभिः चौरैः वृतः वेष्टितः शून्ये निर्जने
स्थले शत्रुभिः गृहीतः आक्रान्तः सिंहश्च व्याघ्रश्च सिंहव्याघ्रौ सिंहव्याघ्राभ्यां अनुयातः सिंहव्याघ्रानुयातः अनुया
तः वृतः वनस्यहस्तिनः वनहस्तिनः तैः वनहस्तिभिः हन्तुं योग्यः वध्यः बन्धेगतः बन्धगतः बन्धेबन्धने गतः प्राप्तः महार्णवे

पिवा ॥ आघूर्णितोवावातेन स्थितःपोतेमहार्णवे २६ पतत्सुचापिशस्त्रेषु संग्रामेभृशदारुणे ॥
सर्व्वाबाधासुघोरासु वेदनाभ्यर्दितोपिवा २७ स्मरन्ममैतच्चरितं नरोमुच्येतसङ्कटात् ॥ मम
प्रभावात्सिंहाद्यादस्यवोवैरिणस्तथा २८ दूरादेवपलायन्तेस्मरतश्चरितंमम ॥ ऋषिरुवाच ॥

समुद्रे पोते महानौकायां वातेन वायुना आघूर्णितः आकुलितः भृशंदारुणः भृशदारुणः तस्मिन् भृशदारुणे भृशं अत्यन्तं दारुणः महान् घोरासु महतीषुवेदनया अभ्यर्दितः वेदनाभ्यर्दितः वेदनया दुःखेन अभ्यर्दितः पीडितः नरः मनुष्यः 'सर्व्व त्र वा समुच्चये बोध्यः' हे देवाः! मम चरितं स्मरतः पुरुषात् मम प्रभावात् सिंहाद्याः दस्यवः तथा वैरिणः दूरात् एव पैला यन्ते स्मरतीति स्मरन् तस्मात्स्मरतः दस्यवः चौराः वैरिणः शत्रवः २६। २७। २८॥ ऋषिरुवाच॥ इत्युक्तेति हे रा जन्! भगवती चण्डविक्रमा साचण्डिका इति उक्त्वा तत्रैव पश्यतां सर्व्वदेवानां अन्तरधीयत चण्डः विक्रमो यस्याः 

दु०टी० सा चण्डविक्रमा चण्डः दारुणः विक्रमः पराक्रमः इति अनेन प्रकारेण पश्यन्तीति पश्यन्तः तेषां पश्यताम् सर्व्वेच ते अ०
१८४ देवाश्च सर्वदेवाः तेषां सर्व्वदेवानां अन्तरधीयत अदृश्याऽभवत् हे राजन्! ते देवाः अपि निरातङ्काः सन्तः यथा पुरा १२
स्वाधिकारान् कृतवन्तः तथा विनिहतारयः सर्व्वे स्वाधिकारान् चक्रुः कथम्भूताः देवाः यज्ञभागभुजः ते प्रसिद्धाः देवाः इन्द्रादयः निरातङ्काः सन्तः निर्भयाः सन्तः पुरा पूर्व्वं स्वस्य स्वस्य अधिकाराः स्वाधिकाराः तान् स्वाधिकारान् विनिहताः अरयो येषान्ते विनिहतारयः विनिहताः नष्टाः अरयः शत्रवः दैत्याः सर्व्वे समस्ताः देवाः स्वाधिकारान् चक्रुःयज्ञस्य

इत्युक्त्वासाभगवती चण्डिकाचण्डविक्रमा २९ पश्यतामेवदेवानां तत्रैवान्तरधीयत ॥ तेपिदेवा
निरातङ्काः स्वाधिकारान्यथापुरा ३० यज्ञभागभुजःसर्व्वे चक्रुर्विनिहतारयः ॥ दैत्याश्चदेव्या
निहते शुम्भेदेवरिपौयुधि ३१ जगद्विध्वंसिनितस्मिन्महोग्रेतुलविक्रमे ॥ निशुम्भेचमहावीर्य्ये

भागः यज्ञभागः यज्ञभागं भुञ्जन्तीति यज्ञभागभुजः हे राजन्! देव्या देवरिपौ जगद्विध्वंसिनि महोग्रे अतुलविक्रमे तस्मिन् शुम्भे किंच महावीर्य्ये निशुम्भे युधिनिहते सति शेषाः पातालं आययुः देवानां रिपुः देवरिपुः तस्मिन् देवरिपौ रिपुः शत्रुः जगतः विध्वंसी जगद्विध्वंसी तस्मिन् जगद्विध्वंसिनि जगतः लोकस्य विध्वंसी नाशकः महांश्चासौ उग्रश्च महोग्रः तस्मिन् महोग्रे अतुलः विक्रमोयस्यसः अतुलविक्रमः तस्मिन् अतुलविक्रमे अतुलः महान् विक्रमः पराक्रमः
महत् वीर्य्यं यस्यसः महावीर्य्यः तस्मिन् महावीर्य्ये वीर्य्यः पराक्रमः निशुम्भे युधि संग्रामे निहते सति प्रहारिते सति १८३

दु०टी० शेषाः अवशिष्टाः दैत्याः आययुः प्राविशत् २९।३०।३१।३२ उपसंहरति एवमिति हे भूप! भगवती नित्या सा देवी अ०
१८५ एवं पुनः सम्भूय जगतः परिपालनं कुरुते नित्या अविनाशिनी एवं अनेन प्रकारेण पुनः पुनः वारंवारं सम्भूय प्रादुर्भूय १२
जगतः लोकस्य परिपालनं रक्षणं कुरुते करोति ३३ पूर्वं मोहकारणमुपसंहरति तयेति हे राजन्! तया एतत् विश्वं मोह्यते साएव विश्वं प्रसूयते सायाचिता सती विज्ञानं प्रयच्छति किंच तुष्टासती ऋद्धिं प्रयच्छति तया देव्या विश्वं जगत् सा एव देव्येव विश्वं जगत् प्रसूयते जनयति सादेवी याचिता सती प्रार्थिता सती विज्ञानं आत्मतत्त्वज्ञानं प्रय

शेषाःपातालमाययुः ३२ एवंभगवतीदेवी सानित्यापिपुनःपुनः ॥ सम्भूयकुरुतेभूप जगतःपरिपालनम् ३३ तयैतन्मोह्यतेविश्वं सैवविश्वंप्रसूयते ॥ सायाचिताचविज्ञानं तुष्टाऋद्धिंप्रयच्छति ३४ व्याप्तंतयैतत्सकलं ब्रह्माण्डंमनुजेश्वर ॥ महाकाल्यामहाकाले महामारीस्वरूपया ३५

च्छति ददाति तुष्टासती प्रसन्ना सती ऋद्धिं ऐश्वर्य्यं प्रयच्छति ददाति 'संहिताया अविवक्षितत्वान्न सन्धिः' ३४ व्याप्तमिति हे मनुजेश्वर! महाकाल्या महाकाले महामारीस्वरूपया तया सकलं एतत् ब्रह्माण्डं व्याप्तं मनुजानां ईश्वरः मनुजेश्वरः तत्सम्बोधने हे मनुजेश्वर! मनुजानां मनुष्याणां ईश्वरः स्वामी महतः कलयतीति महाकाली तया महाकाल्या महतः ब्रह्मादीन् कलयति अधिकारेषु प्रवर्त्तयति महाकाले प्रलयकाले महामार्य्याः स्वरूपं यस्याः सा महामारी
स्वरूपा तया महामारीस्वरूपया तया देव्या सकलं समस्तं एतत् प्रसिद्धम् ३५ सैवेति हे राजन्! सा एव काले महामा १८५

री भवति साएवकाले सृष्टिः भवति सा एव काले अजासती भूतानां स्थितिं करोति साएव सनातनी भवति साएव 
देव्येव काले प्रलयकाले महामारी संहारशक्तिः भवति साएव देव्येव काले सृष्टिकाले सृष्टिः सर्गशक्तिः भवति साएव
देव्येव काले स्थितिकाले अजासती जन्महीना सती भूतानां जीवानां साएव देव्येव सनातनी नाशहीना भवतीत्यर्थः ३६
भवकाल इति हे राजन्! साएव भवकाले नृणांगृहे वृद्धिप्रदा लक्ष्मीः भवति तथा अभावे साएव अलक्ष्मीः सती

सैवकालेमहामारी सैवसृष्टिर्भवत्यजा ॥ स्थितिंकरोतिभूतानां सैवकालेसनातनी ३६ भव
कालेनृणांसैवलक्ष्मीर्वृद्धिप्रदागृहे ॥ सैवाभावेतथालक्ष्मीर्विनाशायोपजायते ३७ स्तुतासम्पू
जितापुष्पैर्धूपगन्धादिभिस्तथा ॥ ददातिवित्तंपुत्रांश्चमतिंधर्मेतथाशुभाम् ३८ इतिश्रीमार्क
ण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येफलस्तुतिर्नामद्वादशोऽध्यायः १२ ॥ ० ॥ ०

विनाशाय उपजायते साएव देव्येव भवकाले सम्पत्समयेनृणां मनुष्याणां गृहे भवने वृद्धिं प्रददातीति वृद्धिप्रदा अभावे
विपत्काले साएव देव्येव अलक्ष्मीः सती दरिद्रासती ३७ स्तुतेति हे राजन्! सास्तुतासती पुष्पैः तथा धूपगन्धादिभिः
संपूजिता सती वित्तं किंच पुत्रान् तथा धर्मेशुभां मतिं ददाति सा देवी धूपश्च गन्धश्च तौ धूपगन्धौ धूपगन्धौ आदीये
षांते धूपगन्धादयः तैः धूपगन्धादिभिः वित्तंधनं शुभांशुभकारिणीम् मतिं बुद्धिम् ३८ इति श्रीनागोजिभट्टसम्मतकृते
सप्तशतीव्याख्यानेदेवीवाक्यकथनंनामद्वादशोऽध्यायः १२ ॥

ऋषिरुवाच ॥ एतदिति हे भूप! हे राजन्! मया उत्तमं एतत् देवीमाहात्म्यं ते कथितं सा देवी एवं प्रभावा भवति सा
का यया इदं जगत् धार्य्यते उत्तमं श्रेष्ठं देव्याः माहात्म्यं देवीमाहात्म्यं माहात्म्यं चरितं ते तुभ्यं एवं प्रभावो यस्याः सा ए
वं प्रभावा यया देव्या विद्येति हे राजन्! भगवद्विष्णुमायया तया तथैव विद्या क्रियते किंच त्वं एषः वैश्यः तथैव अन्ये
विवेकिनः मोह्यन्ते किंच अपरे मोहं एष्यन्ति हे महाराज! त्वं तां परमेश्वरीं शरणं उपेहि उपेहीति वृद्धिश्छान्दसी भग

ऋषिरुवाच ॥ एतत्तेकथितंभूप देवीमाहात्म्यमुत्तमम् ॥ एवंप्रभावासादेवीययेदंधार्य्यते
जगत् १ विद्यातथैवक्रियते भगवद्विष्णुमायया ॥ तयात्वमेषवैश्यश्च तथैवान्येविवेकिनः २
मोह्यन्तेमोहिताश्चैव मोहमेष्यन्तिचापरे ॥ तामुपैहिमहाराज शरणंपरमेश्वरीम् ३ आराधिता
सैवनृणां भोगस्वर्ग्गापवर्ग्गदा ॥ मार्कण्डेयउवाच ॥ इतितस्यवचश्श्रुत्वा सुरथस्सनराधिपः ४

वांश्चासौ विष्णुश्च भगवद्विष्णुः भगवद्विष्णोः माया भगवद्विष्णुमाया तया भगवद्विष्णुमायया तया देव्या विद्या त
त्वज्ञानं विवेकिनः अधिगतलोकशास्त्रतत्त्वाः अपरे अन्ये एष्यन्ति प्राप्स्यन्ति ताम् प्रसिद्धां परमा चासौ ईश्वरी च
परमेश्वरी ताम् परमेश्वरीम् परमा उत्कृष्टा ईश्वरी ईश्वरशक्तिप्रतिपादिका उपैहि प्राप्नुहि १ । २ । ३ आराधितेति
हे राजन्! साएव आराधिता सती नृणां भोगस्वर्ग्गापवर्ग्गदा भवति साएव देव्येव नृणां मनुष्याणां भोगश्च स्वर्ग्गश्च
अपवर्ग्गश्च ते भोगस्वर्गापवर्गाः भोगस्वर्गापवर्गान् ददातीति भोगस्वर्गापवर्गदा भोगः ऐहिकः अपवर्गः मोक्षः ॥ मार्कं

र्कंडेयउवाच ॥ इतीति हे महामुने ! इति तस्य वचः श्रुत्वा नराधिपः सः सुरथः ४ किंच सः वैश्यः राज्यापहरणेन किंच
अतिममत्वेन निर्विण्णः सन् महाभागं संशितव्रतं तं ऋषिं प्रणिपत्य सद्यः तपसे जगाम इति अनेन प्रकारेण तस्य
ऋषेः वचः वाक्यं नराणां अधिपः नराधिपः नराणां पुरुषाणां अधिपः स्वामी राज्यस्य अपहरणं राज्यापहरणं तेन
राज्यापहरणेन निर्विण्णः सन् दुःखाकुलःसन् महान्भागो यस्यसः महाभागः तं महाभागं संशितं व्रतं यस्यसः संशित
व्रतः तं संशितव्रतं संशितंतीव्रंव्रतं प्रसिद्धं ऋषिं सुमेधसं प्रणिपत्य नमस्कृत्य सद्यः तत्क्षणं सः किंच वैश्यः अम्बायाः

प्रणिपत्यमहाभागं तमृषिंसंशितव्रतम् ॥ निर्विण्णोतिममत्वेन राज्यापहरणेन च ५ जगामसद्य
स्तपसे स च वैश्योमहामुने॥ संदर्शनार्थमम्बाया नदीपुलिनसंस्थितः ६ सचवैश्यस्तपस्तेपे देवी
सूक्तंपरंजपन् ॥ तौतस्मिन्पुलिनेदेव्याः कृत्वामूर्त्तिमहीमयीम् ७ अर्हणांचक्रतुस्तस्याः पुष्प

संदर्शनार्त्थं नदीपुलिनसंस्थितः सन् परं देवीसूक्तं जपन्सन् तपः तेपे सः राजासुरथः वैश्यः समाधिः अम्बायाः देव्याः
सम्यग्दर्शनं संदर्शनं संदर्शनाय इति संदर्शनार्थं सम्यग्विधिपूर्व्ववत् नद्याः पुलिनं नदीपुलिनं नदीपुलिने संस्थि
तः नदीपुलिनसंस्थितः पुलिनंतटं परं उत्कृष्टं देवीसूक्तं नमोदेव्या इत्यादिकं पञ्चमाऽध्यायस्य स्तुतिरूपं तस्मिन् पुलि
ने देव्याः महीमयीं मूर्त्तिंकृत्वा यताहारौ निराहारौ तन्मनस्कौ समाहितौ तौ पुष्पधूपाग्नितर्प्पणैः तस्याः अर्हणा
चक्रतुः पुलिनेतटे मह्याः प्रचुरा महीमयी ताम् महीमयीम् मह्याः पृथिव्याः प्रचुराखचिता महीमयीं प्रशस्तमृत्तिकारूपाम्

यताहारौ स्वल्पाहारौ निराहारौ त्यक्ताहारौ तन्मनस्कौ देवीमनस्कौ समाहितौ त्यक्तबाह्यचेष्टौ तौ सुरथवैश्यौ पुष्पंच धूपश्च अग्नितर्पणं च तानि पुष्पधूपाग्नितर्पणानि तैः पुष्पधूपाग्नितर्पणैः अग्नितर्पणं होमः तस्याः देव्याः अर्हणां पूजाम् चक्रतुः कृतवन्तौ ५ । ६ । ७ । ८ ददतुरिति हे राजन् ! तौ निजगात्रासृगुक्षितं एव बलिं ददतुः तौ सुरथ वैश्यौ निजंच तत् गात्रंच निजगात्रं निजगात्रस्य असृक् निजगात्रासृक् निजगात्रासृजा उक्षितः निजगात्रासृगुक्षितः तं निजगात्रासृगुक्षितं निजं स्वकीयं गात्रं शरीरं असृक् रुधिरं उक्षितः प्रोक्षितः बलिं पशुकूष्माण्डाद्युपहारं एवं यतात्मनोः

धूपाग्नितर्प्पणैः ॥ निराहारौयताहारौतन्मनस्कौसमाहितौ ८ ददतुस्तौबलिंचैव निजगात्रासृ
गुक्षितम् ॥ एवंसमाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ९ परितुष्टाजगद्धात्री प्रत्यक्षंप्राहचण्डिका ॥
देव्युवाच ॥ यत्प्रार्थ्यतेत्वयाभूपत्वयाचकुलनन्दन १० मत्तस्तत्प्राप्यतांसर्व्वं परितुष्टाददामि

त्रिभिः वर्षैः समाराधयतोः ९ तयोः जगद्धात्री चण्डिका परितुष्टासती प्रत्यक्षं प्राह एवं अनेन प्रकारेण यतात्मनोः जितचित्तयोः सम्यक् आराधयतः इति समाराधयतः तयोः समाराधयतोः सम्यक् विधिवत् तयोःसुरथवैश्ययोः परितुष्टा सती प्रसन्नासती प्रत्यक्षं यथास्यात्तथा प्राह उवाच देव्युवाच यदिति हे भूप! त्वया किंच हे कुलनन्दन! त्वयायत् प्रार्थ्यते सर्व्वं तत् मत्तः प्राप्यतां अहं परितुष्टा सती तत् ददामि हे भूप! हे राजन् ! हे कुलनन्दन! हे वैश्य! सर्व्वं तत् मत्तः प्राप्यतां अहं परितुष्टा सती तत् ददामि हे भूप! हे राजन्! हे कुलनन्दन वैश्य! सर्व्वं समस्तं तत् प्रार्थनं मत्तः मत् सकाशात् प्राप्यतां

 स्वीक्रियताम् परितुष्टासती प्रसन्नासती तत् प्रार्थ्यमानं ॥ मार्कण्डेयउवाच ॥ हे महामुने! ततः नृपः अन्यजन्मनि अवि 
 भ्रंशि राज्यं वव्रे ततः तदनन्तरं देवीवाक्यश्रवणानन्तरं नृपः राजा सुरथः अन्यजन्मनि जन्मान्तरे अविभ्रंशि चिरस्थायि 
राज्यं वव्रे याचितवान् १०। ११ अत्रैवेति हे देवि! अत्रैव बलात् हतशत्रुबलं निजं राज्यं भवेत् अत्रैव अस्मिन् जन्मन्येव बलात् बलात्कारात् शत्रूणां बलं शत्रुबलं हतं शत्रुबलं यस्मिन् तत् हतशत्रुबलं बलं सैन्यं हतं प्रहारितं निजं स्वकीयं ततः प्राज्ञः सः वैश्यः अपि निर्विण्णमानसः सन् ज्ञानं वव्रे कथंभूतं ज्ञानं ममेत्यहमितिसङ्गविच्युतिकारकम्

तत् ॥ मार्कण्डेय उवाच ॥ ततोवव्रेनृपोराज्यमविभ्रंशयन्यजन्मनि ११ अत्रैवचनिजंराज्यं हतशत्रुबलंबलात् ॥ सोपिवैश्यस्ततोज्ञानं वव्रेनिर्विण्णमानसः १२ ममेत्यहमितिप्राज्ञस्सङ्ग विच्युतिकारकम् ॥ देव्युवाच ॥ स्वल्पैरहोभिर्नृपतेस्वंराज्यंप्राप्स्यतेभवान् १३ हत्वारिपून्स्ख

ततः तदनन्तरं सुरथवरप्रार्थनानन्तरं प्राज्ञः धीमान् निर्विण्णं मानसं यस्यसः निर्विण्णमानसः निर्विण्णं मानसं एव विरक्तं मानसं अन्तःकरणं ज्ञानं तत्त्वज्ञानं वव्रे याचितवान् मम इति अहं इति सङ्गः ममेत्यहमितिसङ्गः ममेत्यहमि तिसङ्गस्य विच्युतिः ममेत्यहमितिसङ्गविच्युतिः ममेत्यहमितिसङ्गविच्युतेःकारकं ममेत्यहमितिसङ्गविच्युतिकारकं सङ्गः सम्बन्धः तस्य विच्युतिः नाशः तस्यकारकं समासश्छान्दसः ॥ देव्युवाच ॥ स्वल्पैरिति हे नृपते! भवान् स्वल्पैःअहो भिः स्वंराज्यं प्राप्स्यते हे नृपते! हे राजन्! स्वल्पैः परिमितैः अहोभिः दिनैः १२। १३ हत्वेति हे राजन्! रिपून् हत्वा तव 

दु०टी० तत्र स्खलितं भविष्यति रिपून् शत्रून् तत्र तस्मिन् राज्ये स्खलितं मृतं इति सृजन् हे राजन्! भवान् मृतःसन् भूयः अ०
१६१ विवस्वतः देवात् जन्मसम्प्राप्य सावर्णिकोनाम मनुः भुवि भविष्यति भूयः पुनः विवस्वतः सूर्य्यात् भुवि पृथिव्यां १३
वैश्यवर्य्येति हे वैश्यवर्य्य! त्वया यः वरः अस्मत्तः अभिवाञ्छितः तं अहं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति हे
वैश्यवर्य्य! हे वैश्यश्रेष्ठ! अभिवाञ्छितः प्रार्थितः अस्मत्तः इति बहुवचनं स्वस्य सर्व्वात्म्यद्योतनार्थं तं वरं प्रयच्छामि

लितं तवतत्रभविष्यति ॥ मृतश्चभूयःसम्प्राप्य जन्मदेवाद्विवस्वतः १४ सावर्णिकोनाममनु ॥
र्भवान्भुविभविष्यति ॥ वैश्यवर्यत्वयायश्च वरोस्मत्तोभिवाञ्छितः १५ तंप्रयच्छामिसंसिद्ध्यै
तवज्ञानंभविष्यति ॥ मार्कण्डेय उवाच ॥ इतिदत्त्वातयोर्देवी यथाभिलषितंवरम् ॥ बभूवान्तर्हि

ददामि संसिद्ध्यै मुक्तये ज्ञानं तस्यज्ञानं मार्कण्डेय उवाच ॥ इतीति हे महामुने! देवी इतितयोः यथाभिलषितं वरंदत्त्वा
ताभ्यां भक्त्या अभिष्टुता सती सद्यः अन्तर्हिता बभूव इति अनेन प्रकारेण तयोः सुरथवैश्ययोः अभिलषितं अनाति
क्रम्य भवतीति यथाभिलषितं वाञ्छितं वरं ताभ्यां सुरथवैश्याभ्यां सद्यः तत्क्षणं अन्तर्हिता अदृश्या एवमिति हे महा
मुने! एवं क्षत्रियर्षभः सुरथः देव्यावरं लब्ध्वा सूर्य्यात् जन्म समासाद्य सावर्णिः मनुः भविता एवं अनेन प्रकारेण च १६१

त्रियर्षभः क्षत्रियश्रेष्ठः समासाद्य प्राप्य भविता भविष्यति १४ । १५ । १६ सावर्णिर्भविता मनुरित्यस्य पुनरावृत्तिर्वक्ष्य अ०
त्रियर्षभः क्षत्रियश्रेष्ठः समासाद्य प्राप्य भविता भविष्यति सावर्णिरित्यारभ्य सावर्णिर्भवितामनुरित्यन्तोयं महामालामन्त्र इति सूचय
माणकात्यायनीतन्त्रात् अन्ते मनुरित्यनेन

तासद्यो भक्त्याताभ्यामभिष्टुता १६ एवंदेव्यावरंलब्ध्वा सुरथःक्षत्रियर्षभः ॥ सूर्य्याज्जन्मस
मासाद्यसावर्णिर्भवितामनुः १७ इतिश्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येसुरथवै
श्ययोर्वरप्रदानं नामत्रयोदशोऽध्यायः १३ ॥ ० ॥ ० ॥ ० ॥

इतिश्रीनागोजिभट्टसम्मतकृतेसप्तशतीव्याख्यानेसुरथवैश्ययोर्वरप्रदानंनामत्रयोदशोऽध्यायः १३ ॥ ० ॥
ति १७ ॥

इति सटीकदुर्गा समाप्ता ॥

मुंशी नवलकिशोर ( सी. आई. ई ) के छापेखाने लखनऊ में छपी
मार्च सन् १९०७ ई० ॥

